# ऋग्वेदः सूक्तं ७.१



दे. अग्निः।विराट्, १९-२५ त्रिष्टुप्।

---

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥१॥
तमग्निमस्ते वसवो न्यृण्वन्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥२॥
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उप यन्ति वाजाः ॥३॥
प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचन्त द्युमन्तः ।
यत्रा नरः समासते सुजाताः ॥४॥
दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तम् ।
न यं यावा तरति यातुमावान् ॥५॥
उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची ।
उप स्वैनमरमतिर्वसूयुः ॥६॥

विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् ।
प्र निस्वरं चातयस्वामीवाम् ॥७॥
आ यस्ते अग्न इधते अनीकं वसिष्ठ शुक्र दीदिवः पावक ।
उतो न एभि स्तवथैरिह स्याः ॥८॥
वि ये ते अग्ने भेजिरे अनीकं मर्ता नरः पित्र्यासः पुरुत्रा ।
उतो न एभिः सुमना इह स्याः ॥९॥
इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु मायाः ।
ये मे धियं पनयन्त प्रशस्ताम् ॥१०॥
मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।
प्रजावतीषु दुर्यासु दुर्य ॥११॥
यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तं स्वपत्यं क्षयं नः ।
स्वजन्मना शेषसा वावृधानम् ॥१२॥
पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेररुषो अघायोः ।
त्वा युजा पृतनायूँरभि ष्याम् ॥१३॥
सेदग्निरग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः ।
सहस्रपाथा अक्षरा समेति ॥१४॥
सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् ।
सुजातासः परि चरन्ति वीराः ॥१५॥
अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् ।
परि यमेत्यध्वरेषु होता ॥१६॥
त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या ।
उभा कृण्वन्तो वहतू मियेधे ॥१७॥
इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि व्यन्तु ॥१८॥
मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।

मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥१९॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।

रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥२०॥

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।

मा त्वे सचा तनये नित्य आ धङ्मा वीरो अस्मन्नर्यो वि दासीत् ॥२१॥

मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।

मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त ॥२२॥

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।

स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥२३॥

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहन्तम् ।

येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥२४॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।

रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥२५॥

**सायणभाष्यम्**

॥ श्रीः ॥

॥ अथ सप्तमं मण्डलम् ॥

अथ सप्तमं मण्डलमारभ्यते । तस्मिन् मण्डले षडनुवाकाः । प्रथमेऽनुवाके सप्तदश सूक्तानि । तत्र ‘अग्नि नरः' इति पञ्चविंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका---' अग्निं पञ्चाधिका विराजोऽष्टादशाद्याः' इति । ‘ सप्तमं मण्डलं वसिष्ठोऽपश्यत् । इत्युक्तत्वात् मण्डलद्रष्टा वसिष्ठ ऋषिः । आदितोऽष्टादश विराजस्त्र्येकादशकाः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । मण्डलादिपरिभाषया अग्निर्देवता । विश्वजितीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च-’ विश्वजितोऽग्निं नर इत्याज्यम्' ( आश्व. श्रौ. ८. ७) इति । अत्रेश्चतुर्वीराख्ये चतूरात्रे' चतुर्थेऽहनीदमेव सूक्तमाज्यशस्त्रम्। सूत्र्यते हि- अग्निं नर इति चतुर्थे ' ( आश्व. श्रौ. १०. २ ) इति । व्यूळ्हे दशरात्रे चतुर्थेऽहनीदं सूक्तं जातवेदस्यनिविद्धानम्। सूत्रितं च-’ अग्निं नर इत्याग्निमारुतम् ' ( आश्व. श्रौ. ८. ८) इति । महाव्रतेऽपीदमाज्यशस्त्रम् । तथैव पञ्चमारण्यके सूत्र्यते--’ आज्यप्रउगे विश्वजितः ' (ऐ. आ. ५.१.१ ) इति । अविवाक्येऽहनि प्रातरनुवाके ‘त्वमग्ने वसून्' इत्यादीनामनुष्टुभां स्थान आद्यस्तृचः प्रक्षेपणीयः । सूत्र्यते हि-’ दशमेऽहन्यनुष्टुभां स्थानेऽग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये क्रतौ ' (आश्व. श्रौ. ८.१२ ) इति । आद्याः पड्चः तस्मिन्नेवाहनि आग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः । सूत्रितं च -- अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपौ' ( आश्व. श्रौ. ८.१२ ) इति ।

मण्डलादिहोमेऽप्येषा । आधाने तृतीयायामिष्टौ ‘प्रेद्धः' इति स्विष्टकृतोऽनुवाक्या । सूत्रितं च -’ प्रेद्धो अग्न इमो अग्न इति संयाज्ये' (आश्व. श्रौ. २.१) इति । एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोऽनुवाक्या । प्रायणीयेष्टौ ‘सेदग्निरग्नीन्' इत्यादिके द्वे स्विष्टकृतो याज्यानुवाक्ये । सूत्रितं च – ' सेदग्निरग्नीँरत्यस्त्वन्यानिति द्वे संयाज्ये' ( आश्व. श्रौ. ४.३ ) इति । आधाने तृतीयायामिष्टौ ‘इमो अग्ने' इति स्विष्टकृतो याज्या । सूत्रितं च- ‘इमो अग्न इति संयाज्ये' ( आश्व. श्रौ. २.१ ) इति । एवमन्यत्रापि दीक्षणीयादिष्वेषा सौविष्टकृती याज्या । प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च ‘त्वमग्ने सुहवः' इत्याद्याः पञ्चर्चः । सूत्रितं च-’ त्वमग्ने सुहवो रण्वसंदृक् ' ( आश्व. श्रौ. ४.१३ ) इति ।।

अ॒ग्निं नरो॒ दीधि॑तिभिर॒रण्यो॒र्हस्त॑च्युती जनयंत प्रश॒स्तं ।

दू॒रे॒दृशं॑ गृ॒हप॑तिमथ॒र्युं ॥१

अ॒ग्निम् । नरः॑ । दीधि॑तिऽभिः । अ॒रण्योः॑ । हस्त॑ऽच्युती । ज॒न॒य॒न्त॒ । प्र॒ऽश॒स्तम् ।

दू॒रे॒ऽदृश॑म् । गृ॒हऽप॑तिम् । अ॒थ॒र्युम् ॥१

अग्निम् । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयन्त । प्रऽशस्तम् ।

दूरेऽदृशम् । गृहऽपतिम् । अथर्युम् ॥१

“नरः नेतार ऋत्विजः “प्रशस्तं प्रकर्षेण स्तुतं "दूरेदृशं दूरे दृश्यमानं दूरे पश्यन्तं वा “गृहपतिं गृहाणां पालकम् “अथर्युम् आगम्यमतनवन्तं वा “अग्निम् “अरण्योः विद्यमानं “हस्तच्युती हस्तप्रच्युत्या हस्तगत्या "दीधितिभिः अङ्गुलिभिः “जनयन्त। दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मसु । अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरेदर्शनं गृहपतिमतनवन्तम् ' ( निरु. ५.१०) इति ॥

तम॒ग्निमस्ते॒ वस॑वो॒ न्यृं॑ण्वन्सु॒प्रति॒चक्ष॒मव॑से॒ कुत॑श्चित् ।

द॒क्षाय्यो॒ यो दम॒ आस॒ नित्यः॑ ॥२

तम् । अ॒ग्निम् । अस्ते॑ । वस॑वः । नि । ऋ॒ण्व॒न् । सु॒ऽप्र॒ति॒चक्ष॑म् । अव॑से । कुतः॑ । चि॒त् ।

द॒क्षाय्यः॑ । यः । दमे॑ । आस॑ । नित्यः॑ ॥२

तम् । अग्निम् । अस्ते । वसवः । नि । ऋण्वन् । सुऽप्रतिचक्षम् । अवसे । कुतः । चित् ।

दक्षाय्यः । यः । दमे । आस । नित्यः ॥२

“यः अग्निः “दमे गृहे “दक्षाय्यः पूजनीयो हविर्भिः समर्थनीयो वा “नित्यः अजस्रः “आस बभूव “तं “सुप्रतिचक्षं सुप्रतिदर्शनम् “अग्निं “कुतश्चित् सर्वस्मादपि भयहेतः “अवसे रक्षणाय “वसवः वासका ये वसिष्ठाः “अस्ते गृहे “न्यृण्वन् न्यदधुः ।।

प्रेद्धो अग्ने दीदिहि पुरो नोऽजंस्रया सूर्म्या यविष्ठ ।

त्वां शश्वंत उप यंति वाजाः ॥३

प्रऽइंद्धः । अग्ने । दीदिहि । पुरः । नः । अजंस्रया । सूर्म्या । यविष्ठ ।

त्वाम् । शश्वंन्तः । उप । यन्ति । वाजाः ॥३

प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ ।

त्वाम् । शश्वन्तः । उप । यन्ति । वाजाः ॥३

“यविष्ठ युवतम हे “अग्ने “प्रेद्धः प्रकर्षेण समिद्धस्त्वम् “अजस्रया अशरणशीलया “सूर्म्या ज्वालया “नः अस्मदर्थं “पुरः पुरस्तात् आहवनीयायतने "दीदिहि दीप्यस्व । “त्वां “शश्वन्तः बहवः “वाजाः अन्नानि हवींषि “उप “यन्ति उपगच्छन्ति ।

प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरांसः शोशुचंत द्युमंतः ।

यत्रा नरः समासंते सुजाताः ॥४

प्र । ते । अग्नयः । अग्निऽभ्यः । वरंम् । निः । सुऽवीरांसः । शोशुचन्त । द्युऽमन्तः ।

यत्रं । नरः । सम्ऽआसंते । सुऽजाताः ॥४

प्र । ते । अग्नयः । अग्निऽभ्यः । वरम् । निः । सुऽवीरासः । शोशुचन्त । द्युऽमन्तः ।

यत्र । नरः । सम्ऽआसते । सुऽजाताः ॥४

“अग्निभ्यः लौकिकेभ्योऽग्निभ्यः “वरम् अत्यन्तं “द्युमन्तः दीप्तिमन्तः “सुवीरासः कल्याणपुत्रपौत्रप्रदाः “ते “अग्नयः “प्र “निः “शोशुचन्त प्रकर्षेण नितरां दीप्यन्ते । “यत्र येष्वग्निषु “सुजाताः सुजन्मानः “नरः कर्मणां नेतारो यजमाना ऋत्विजो वा “समासते सहासते ॥

दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं संहस्य प्रशस्तं ।

न यं यावा तरंति यातुमावांन् ॥५

दाः । नः । अग्ने । धिया । रयिम् । सुऽवीरंम् । सुऽअपत्यम् । सहस्य । प्रऽशस्तम् ।

न । यम् । यावां । तरंति । यातुऽमावांन् ॥५

दाः । नः । अग्ने । धिया । रयिम् । सुऽवीरम् । सुऽअपत्यम् । सहस्य । प्रऽशस्तम् ।

न । यम् । यावा । तरति । यातुऽमावान् ॥५

“सहस्य अभिभवकुशल हे “अग्ने “सुवीरं शोभनपुत्रोपेतं "स्वपत्यं शोभनपौत्रोपेतं "प्रशस्तं श्रेष्ठं “रयिं धनं “धिया स्तोत्रेण "नः अस्मभ्यं “दाः देहि । “यं रयिं “यावा अभिगन्ता शत्रुः “यातुमावान् हिंसाया निर्गतः ॥ नलोपाभावश्छान्दसः॥ यद्वा । हिंसायुक्तः ॥ परो वतिर्मत्वर्थीयः पूरकः ॥ “न “तरति न बाधते ॥ ॥ २३ ॥

उप॒ यमेति॑ युव॒तिः सु॒दक्षं॑ दो॒षा वस्तो॑र्ह॒विष्म॑ती घृ॒ताची॑ ।

उप॒ स्वैन॑म॒रम॑तिर्वसू॒युः ॥६

उप॑ । यम् । एति॑ । यु॒व॒तिः । सु॒ऽदक्ष॑म् । दो॒षा । वस्तोः॑ । ह॒विष्म॑ती । घृ॒ताची॑ ।

उप॑ । स्वा । ए॒न॒म् । अ॒रम॑तिः । व॒सु॒ऽयुः ॥६

उप । यम् । एति । युवतिः । सुऽदक्षम् । दोषा । वस्तोः । हविष्मती । घृताची ।

उप । स्वा । एनम् । अरमतिः । वसुऽयुः ॥६

"सुदक्षं सुबलं “यम् अग्निं “हविष्मती हविषा युक्ता “घृताची । घृतमञ्चतीति घृताची जुहूः । “युवतिः अग्निना नित्ययुक्ता “दोषा “वस्तोः रात्रावहनि च “उप “एति उपगच्छति तम् “एनं “स्वा स्वकीया “अरमतिः दीप्तिः “वसूयुः स्तोतॄणां धनमिच्छन्ती “उप एति ॥

विश्वा॑ अ॒ग्नेऽप॑ द॒हारा॑ती॒र्येभि॒स्तपो॑भि॒रद॑हो॒ जरू॑थं ।

प्र निं॑स्व॒रं चा॑तय॒स्वामी॑वां ॥७

विश्वाः॑ । अ॒ग्ने॒ । अप॑ । द॒ह॒ । अरा॑तीः । येभिः॑ । तपः॑ऽभिः । अद॑हः । जरू॑थम् ।

प्र । नि॒ऽस्व॒रम् । चा॒त॒य॒स्व॒ । अमी॑वाम् ॥७

विश्वाः । अग्ने । अप । दह । अरातीः । येभिः । तपःऽभिः । अदहः । जरूथम् ।

प्र । निऽस्वरम् । चातयस्व । अमीवाम् ॥७

हे “अग्ने “विश्वाः विश्वान् “अरातीः शत्रून् “तपोभिः तेजोभिः “अप “दह । "येभिः यैः तपोभिः “जरूथं परुषशब्दकारिणं राक्षसम् ॥ गृणातेरूथन्प्रत्यये सति जरूथशब्दनिष्पत्तिः ॥ “अदहः दहसि । किंच “अमीवां रोगं “निस्वरं न्यक्कृतोपतापं यथा भवति तथा ॥ ‘ स्वृ शब्दोपतापयोः' इति धातुः ॥ “प्र “चातयस्व प्रकर्षेण नाशय । ‘ चततिर्गत्यर्थो वा ' इति भट्टभास्करमिश्रः ॥

आ यस्ते॑ अग्न इध॒ते अनी॑कं॒ वसि॑ष्ठ शुक्र॒ दीदि॑वः॒ पाव॑क ।

उ॒तो न॑ ए॒भिः स्त॒वथै॑रि॒ह स्याः॑ ॥८

आ । यः । ते॒ । अ॒ग्ने॒ । इ॒ध॒ते । अनी॑कम् । वसि॑ष्ठ । शुक्र॑ । दीदि॑ऽवः । पाव॑क ।

उ॒तो इति॑ । नः॒ । ए॒भिः । स्त॒वथैः॑ । इ॒ह । स्याः॒ ॥८

आ । यः । ते । अग्ने । इधते । अनीकम् । वसिष्ठ । शुक्र । दीदिऽवः । पावक ।

उतो इति । नः । एभिः । स्तवथैः । इह । स्याः ॥८

"वसिष्ठ श्रेष्ठ "शुक्र शुभ्र "दीदिवः दीप्त "पावक शोधक हे "अग्ने "ते तव "अनीकं तेजः "यः "आ "इधते समेधयति तस्येव "नः अस्माकम् "उतो अपि च "एभिः "स्तवथैः स्तोत्रैः "इह अस्मिन् यज्ञे "स्याः भव ॥

वि ये ते॑ अग्ने भेजि॒रे अनी॑कं॒ मर्ता॒ नरः॒ पित्र्या॑सः पुरु॒त्रा ।

उ॒तो न॑ ए॒भिः सु॒मना॑ इ॒ह स्याः॑ ॥९

वि । ये । ते॒ । अ॒ग्ने॒ । भे॒जि॒रे । अनी॑कम् । मर्ताः॑ । नरः॑ । पित्र्या॑सः । पु॒रु॒ऽत्रा ।

उ॒तो इति॑ । नः॒ । ए॒भिः । सु॒ऽमनाः॑ । इ॒ह । स्याः॒ ॥९

वि । ये । ते । अग्ने । भेजिरे । अनीकम् । मर्ताः । नरः । पित्र्यासः । पुरुऽत्रा ।

उतो इति । नः । एभिः । सुऽमनाः । इह । स्याः ॥९

हे "अग्ने "ते तव "अनीकं तेजः "पित्र्यासः पितृहिताः आर्षेया वा "मर्ताः मनुष्याः "नरः कर्मणां नेतारः "ये यजमानाः "पुरुत्रा बहुषु देशेषु "वि "भेजिरे विभजन्ते । आदधुरिति यावत् । तेषामिव "नः अस्माकम् "उतो अपि "एभिः स्तुतैः सह स्तोत्रैर्वा "सुमनाः अनुग्राहकमनाः सन् "इह यज्ञे "स्थाः भव ॥

इ॒मे नरो॑ वृत्र॒हत्ये॑षु॒ शूरा॒ विश्वा॒ अदे॑वीर॒भि सं॑तु मा॒याः ।

ये मे॒ धियं॑ प॒नयं॑त प्रश॒स्तां ॥१०

इ॒मे । नरः॑ । वृ॒त्र॒ऽहत्ये॑षु । शूराः॑ । विश्वाः॑ । अदे॑वीः । अ॒भि । स॒न्तु॒ । मा॒याः ।

ये । मे॒ । धियं॑म् । प॒नयं॑न्त । प्र॒ऽश॒स्ताम् ॥१०

इमे । नरः । वृत्रऽहत्येषु । शूराः । विश्वाः । अदेवीः । अभि । सन्तु । मायाः ।

ये । मे । धियम् । पनयन्त । प्रऽशस्ताम् ॥१०

“ये मनुष्याः “मे मदीयां “प्रशस्तां प्रकृष्टां “धियं कर्म स्तुतिं वा “पनयन्त स्तुवन्ति ब्रुवन्ति वा ते “इमे मयि स्निग्धाः “नरः मनुष्याः “वृत्रहत्येषु संग्रामेषु “शूराः “अदेवीः आसुरीः “विश्वाः सर्वाः "मायाः “अभि “सन्तु अभिभवन्तु ॥ ॥ २४ ॥

मा शूनें अग्ने नि षंदाम नृणां माशेषंसोऽवीरंता परिं त्वा ।

प्रजावंतीषु दुर्यांसु दुर्य ॥११

मा । शूनें । अग्ने । नि । सदाम । नृणाम् । मा । अशेषंसः । अवीरंता । परिं । त्वा ।

प्रजाऽवंतीषु । दुर्यांसु । दुर्य ॥११

मा । शूने । अग्ने । नि । सदाम । नृणाम् । मा । अशेषसः । अवीरता । परि । त्वा ।

प्रजाऽवतीषु । दुर्यासु । दुर्य ॥११

हे “अग्ने "शूने शून्ये पुत्रादिरहिते गृहे "मा “नि “षदाम न निवसाम । “नृणाम् अन्येषां च गृहे “मा नि षदाम । “दुर्य गृहेभ्यो हित हे अग्ने “अशेषसः अपुत्राः । ‘ तोक्म शेषः' इति पुत्रनामसु पाठात् । “अवीरता अवीरतया युक्ताश्च सन्तः “त्वा त्वां “परि चरन्तः “प्रजावतीषु एव "दुर्यासु गृहेषु निवसाम ॥

यमश्वी नित्यंमुपयातिं यज्ञं प्रजावंतं स्वपत्यं क्षयं नः ।

स्वजंन्मना शेषंसा वावृधानं ॥१२

यम् । अश्वी । नित्यंम् । उपऽयातिं । यज्ञम् । प्रजाऽवंन्तम् । सुऽअपत्यम् । क्षयंम् । नः ।

स्वऽजंन्मना । शेषंसा । ववृधानम् ॥१२

यम् । अश्वी । नित्यम् । उपऽयाति । यज्ञम् । प्रजाऽवन्तम् । सुऽअपत्यम् । क्षयम् । नः ।

स्वऽजन्मना । शेषसा । ववृधानम् ॥१२

“यं “यज्ञं यज्ञाश्रयम् “अश्वी अश्ववानग्निः “नित्यमुपयाति तं “प्रजावन्तं भृत्यादिसहितं “स्वपत्यं शोभनसंतानोपेतं “स्वजन्मना औरसेन “शेषसा पुत्रेण “ववृधानं वर्धमानं “क्षयं गृहं “नः अस्मभ्यं हे अग्ने देहीति शेषः ।।

पाहि नों अग्ने रक्षसो अजुंष्टात्पाहि धूर्तेररंरुषो अघायोः ।

त्वा युजा पृंतनायूँरभि ष्यां ॥१३

पाहि । नः । अग्ने । रक्षसंः । अजुंष्टात् । पाहि । धूर्तेः । अरंरुषः । अघऽयोः ।

त्वा । यु॒जा । पृ॒त॒ना॒ऽयून् । अ॒भि । स्या॒म् ॥१३

पाहि । नः । अग्ने । रक्षसः । अजुष्टात् । पाहि । धूर्तेः । अररुषः । अघऽयोः ।

त्वा । युजा । पृतनाऽयून् । अभि । स्याम् ॥१३

हे “अग्ने “नः अस्मान् “अजुष्टात् अप्रीतिविषयात् “रक्षसः राक्षसात् “पाहि रक्ष । किंच “अररुषः अदातुः "अघायोः पापमिच्छतः “धूर्तेः हिंसकात् "पाहि । अपि च “त्वा त्वया “युजा सहायभूतेन "पृतनायून् पृतनाकामान् “अभि “ष्याम् अहमभिभवेयम् ॥

सेद॒ग्निर॒ग्नीँर॒त्य॑स्त्व॒न्यान्यत्र॑ वा॒जी तन॑यो वी॒ळुपा॑णिः ।

स॒हस्र॑पाथा अ॒क्षरा॑ स॒मेति॑ ॥१४

सः । इत् । अ॒ग्निः । अ॒ग्नीन् । अति॑ । अ॒स्तु॒ । अ॒न्यान् । यत्र॑ । वा॒जी । तन॑यः । वी॒ळु॒ऽपा॑णिः ।

स॒हस्र॑ऽपाथाः । अ॒क्षरा॑ । स॒म्ऽएति॑ ॥१४

सः । इत् । अग्निः । अग्नीन् । अति । अस्तु । अन्यान् । यत्र । वाजी । तनयः । वीळुऽपाणिः ।

सहस्रऽपाथाः । अक्षरा । सम्ऽएति ॥१४

“स “इत् स एव “अग्निः आहवनीयादिरस्मदीयः “अन्यान् इतरान् अन्यदीयान् “अग्नीन् “अत्यस्तु अतिभवतु । “यत्र यस्मिन्नग्नौ “वाजी अशनवान् बलवान् वा “वीळुपाणिः दृढहस्तः । ‘वीळु च्यौत्नम्' इति बलनामसु पाठात् । “सहस्रपाथाः बह्वन्नो बहुस्थानो वा बहूदको वा “तनयः अस्मत्पुत्रः “अक्षरा अक्षरेण क्षयरहितेन स्तोत्रेण “समेति सम्यक् परिचरन्नेति । समर्थपुत्रवत एवाग्निः अन्यदीयानग्नीनभिभवतीति भावः ॥

सेद॒ग्निर्यो व॑नुष्य॒तो नि॒पाति॑ समे॒द्धार॒मंह॑स उरु॒ष्यात् ।

सु॒जा॒तासः॒ परि॑ चरंति वी॒राः ॥१५

सः । इत् । अ॒ग्निः । यः । व॒नु॒ष्य॒तः । नि॒ऽपाति॑ । स॒म्ऽए॒द्धार॑म् । अंह॑सः । उ॒रु॒ष्यात् ।

सु॒ऽजा॒तासः॑ । परि॑ । च॒र॒न्ति॒ । वी॒राः ॥१५

सः । इत् । अग्निः । यः । वनुष्यतः । निऽपाति । सम्ऽएद्धारम् । अंहसः । उरुष्यात् ।

सुऽजातासः । परि । चरन्ति । वीराः ॥१५

“यः समेद्धारं प्रबोधकं “वनुष्यतः हिंसकात् । ‘वनुष्यतिर्हन्तिकर्मा' (निरु. ५. २) इति यास्कः । “उरुष्यात् अधिकात् “अंहसः पापात् च "निपाति अत्यन्तं रक्षति । यं च “सुजातासः सुजन्मान एव “वीराः स्तोतारः सुता वा “परि “चरन्ति “स “इत् स एव

“अग्निः ।। ॥२५॥

अ॒यं सो अ॒ग्निराहु॑तः पुरु॒त्रा यमीशा॑न॒: समिद्धि॑धे ह॒विष्मा॑न् ।

परि॒ यमेत्य॑ध्व॒रेषु॒ होता॑ ॥१६

अ॒यम् । सः । अ॒ग्निः । आऽहु॑तः । पु॒रु॒ऽत्रा । यम् । ईशा॑नः । सम् । इत् । इ॒न्धे । ह॒विष्मा॑न् ।

परि॑ । यम् । एति॑ । अ॒ध्व॒रेषु॑ । होता॑ ॥१६

अयम् । सः । अग्निः । आऽहुतः । पुरुऽत्रा । यम् । ईशानः । सम् । इत् । इन्धे । हविष्मान् ।

परि । यम् । एति । अध्वरेषु । होता ॥१६

“यम् अग्निम् “ईशानः समृद्ध ऐश्वर्यमिच्छन् वा “हविष्मान् यजमानः “सम् “इन्धे सम्यक् दीपयति । “यं च “अध्वरेषु हिंसारहितेषु यज्ञेषु “होता देवानामाह्वाता “परि “एति परिगच्छति “सः "अयम् “अग्निः “पुरुत्रा बहुषु देशेषु बहुषु यज्ञेषु वा “आहुतः आहुतिभिरभिहुतः ॥

त्वे अ॑ग्न आ॒हव॑नानि॒ भूरी॑शा॒नास॒ आ जु॑हुयाम॒ नित्या॑ ।

उ॒भा कृ॒ण्वंतो॑ वह॒तू मि॒येधे॑ ॥१७

त्वे इति॑ । अ॒ग्ने॒ । आ॒ऽहव॑नानि । भूरि॑ । ई॒शा॒नास॑: । आ । जु॒हु॒या॒म॒ । नित्या॑ ।

उ॒भा । कृ॒ण्वन्त॑: । व॒ह॒तू इति॑ । मि॒येधे॑ ॥१७

त्वे इति । अग्ने । आऽहवनानि । भूरि । ईशानासः । आ । जुहुयाम । नित्या ।

उभा । कृण्वन्तः । वहतू इति । मियेधे ॥१७

हे अग्ने “त्वे त्वयि “ईशानासः धनानामीश्वराः सन्तः “नित्या नित्यान्यग्निहोत्रादीनि “उभा उभौ “वहतू वहनहेतू स्तोत्रं शस्त्रं च “कृण्वन्तः कुर्वन्तः “मियेधे यज्ञे “भूरि बहूनि “आहवनानि हवींषि “आ “जुहुयाम आजुहवाम ॥

इ॒मो अ॑ग्ने वी॒तत॑मानि ह॒व्याज॑स्रो वक्षि दे॒वता॑ति॒मच्छ॑ ।

प्रति॑ न ईं सुर॒भीणि॑ व्यं॑तु ॥१८

इ॒मो इति॑ । अ॒ग्ने॒ । वी॒तऽत॑मानि । ह॒व्या । अज॑स्रः । व॒क्षि॒ । दे॒वऽता॑तिम् । अच्छ॑ ।

प्रति॑ । न॒: । ई॒म् । सु॒र॒भीणि॑ । व्य॒न्तु॒ ॥१८

इमो इति । अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि । देवऽतातिम् । अच्छ ।

प्रति । नः । ईम् । सुरभीणि । व्यन्तु ॥१८

हे “अग्ने त्वम् “अजस्रः अनवरतः सन् "इमो इमानि “वीततमानि अतिशयेन कान्तानि “हव्या हव्यानि “देवतातिं देवानां समूहम् अभि “वक्षि वह । “अच्छ गच्छ त ! “नः अस्मदीयानि “सुरभीणि शोभनानि “ईम् एतानि हव्यानि देवाः “प्रति “व्यन्तु प्रत्येकं कामयन्ताम् ।।

मा नों अग्नेऽवीरंते परां दा दुर्वाससेऽमंतये मा नों अस्यै ।

मा नः क्षुधे मा रक्षसं ऋतावो मा नो दमे मा वन आ जुंहूर्थाः ॥१९

मा । नः । अग्ने । अवीरंते । परां । दाः । दुःऽवासंसे । अमंतये । मा । नः । अस्यै ।

मा । नः । क्षुधे । मा । रक्षसें । ऋतऽवः । मा । नः । दमें । मा । वनें । आ । जुहूर्थाः ॥१९

मा । नः । अग्ने । अवीरते । परा । दाः । दुःऽवाससे । अमतये । मा । नः । अस्यै ।

मा । नः । क्षुधे । मा । रक्षसे । ऋतऽवः । मा । नः । दमे । मा । वने । आ । जुहूर्थाः ॥१९

हे “अग्ने “नः अस्मान् “अवीरते अपुत्रताय “मा "परा “दाः मा देहि । “दुर्वाससे दुष्टवस्त्राय च नो मा परा दाः । “अस्यै “अमतये अभिहान्यै “नः अस्मान् “मा परा दाः । “क्षुधे अशनायायै “नः अस्मान् “मा च परा दाः । “रक्षसे बलिने चास्मान् “मा परा दाः । हे “ऋतावः सत्यवन् अग्ने “नः अस्मान् “दमे गृहे "मा जुहूर्थाः मा हिंसीः ॥ ‘हुर्च्छा कौटिल्ये' इति धातुः ।। “वने चास्मान् “मा जुहूर्थाः ।।

नू मे ब्रह्मांण्यग्न उच्छंशाधि त्वं देंव मघवंद्भ्यः सुषूदः ।

रातौ स्यांमोभयांस आ तें यूयं पांत स्वस्तिभिः सदां नः ॥२०

नु । मे । ब्रह्मांणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवंत्ऽभ्यः । सुसूदः ।

रातौ । स्याम् । उभयांसः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदां । नः ॥२०

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।

रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥२०

हे “अग्ने “मे मम मदर्थं “ब्रह्माणि अन्नानि “नु क्षिप्रम् “उच्छशाधि उत्कर्षेण शोधितानि कुरु । किंच हे “देव द्योतमानाग्ने “मघवद्भ्यः हविष्मद्भ्योऽस्मभ्यं सुषूदः अन्नानि प्रेरय । “ते त्वदीयायां “रातौ दाने “उभयासः स्तोत्रिणः शस्त्रिणश्च अथवा स्तुवन्तो यजमानाश्च

वयम् “आ “स्याम अत्यर्थं भवेम । “नः अस्मान् “यूयं त्वत्परिवाराश्च सर्वे "स्वस्तिभिः अविनाशिभिर्मङ्गलैः । तथा च यास्कः– स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्ति' (निरु. ३. २१) इति । “सदा “पात रक्षत ॥ ॥ २६ ॥

त्वम॑ग्ने सु॒हवो॑ र॒ण्वसं॑दृक्सुदी॒ती सू॑नो सहसो दिदीहि ।

मा त्वे सचा॒ तन॑ये॒ नित्य॒ आ ध॒ङ्मा वी॒रो अ॒स्मन्नर्यो॒ वि दा॑सीत् ॥२१

त्वम् । अ॒ग्ने॒ । सु॒ऽहवः॑ । र॒ण्वऽसं॑न्दृक् । सु॒ऽदी॒ती । सू॒नो॒ इति॑ । स॒ह॒सः॒ । दि॒दी॒हि॒ ।

मा । त्वे इति॑ । सचा॑ । तन॑ये । नित्ये॑ । आ । ध॒क् । मा । वी॒रः । अ॒स्मत् । नर्यः॑ । वि । दा॒सी॒त् ॥२१

त्वम् । अग्ने । सुऽहवः । रण्वऽसन्दृक् । सुऽदीती । सूनो इति । सहसः । दिदीहि ।

मा । त्वे इति । सचा । तनये । नित्ये । आ । धक् । मा । वीरः । अस्मत् । नर्यः । वि । दासीत् ॥२१

"सहसः “सूनो सहसः सुत हे “अग्ने “सुहवः स्वाह्वानः “रण्वसंदृक् रमणीयसंदर्शनः “त्वं “सुदीती शोभनया दीप्त्या “दिदीहि दीप्यस्व । किंच “तनये “नित्ये औरसे पुत्रे “त्वे त्वं “सचा सहायभूतः “मा “आ “धक् माभिधाक्षीः । अपि च “अस्मत् पृथग्भूतः अस्माकं वा । षष्ठ्यर्थे पञ्चमी । "वीरः पुत्रः “नर्यः नरहितः “मा “वि “दासीत् नोपक्षीयेत ।।

मा नो॑ अग्ने दु॒र्भृतये॒ सचै॒षु दे॒वेद्धे॑ष्व॒ग्निषु॒ प्र वो॑चः ।

मा ते॑ अ॒स्मा॑दु॒र्म॒तयो॑ भृ॒माच्चि॑द्दे॒वस्य॑ सूनो सहसो नशंत ॥२२

मा । न॒ः । अ॒ग्ने॒ । दु॒ःऽभृतये॑ । सचा॑ । ए॒षु । दे॒वऽइ॑द्धेषु । अ॒ग्निषु॑ । प्र । वो॒च॒ः ।

मा । ते॒ । अ॒स्मान् । दु॒ःऽम॒तयः॑ । भृ॒मात् । चि॒त् । दे॒वस्य॑ । सू॒नो॒ इति॑ । स॒ह॒स॒ः । न॒श॒न्त॒ ॥२२

मा । नः । अग्ने । दुःऽभृतये । सचा । एषु । देवऽइद्धेषु । अग्निषु । प्र । वोचः ।

मा । ते । अस्मान् । दुःऽमतयः । भृमात् । चित् । देवस्य । सूनो इति । सहसः । नशन्त ॥२२

हे “अग्ने "सचा सहायभूतस्त्वं “देवेद्धेषु ऋत्विग्भिः समिद्धेषु “एषु “अग्निषु दुर्भृतये कृच्छ्रभरणाय “नः अस्मान् “मा “प्र “वोचः न ब्रूहि। त्वत्सहायभूता अग्नयो यथा मामकृच्छ्रेण बिभृयुः तथा ब्रूहीत्यर्थः । किंच “सहसः “सूनो हे बलस्य पुत्र अग्ने “देवस्य द्योतमानस्य “ते तव “दुर्मतयः निग्रहबुद्धयः “भूमाच्चित् भ्रमादपि । अत्र संप्रसारणं छान्दसम् । प्रमादादपीत्यर्थः । “अस्मान् “मा “नशन्त मा व्याप्नुवन्तु । नशदिति व्याप्तिकर्मसु पाठात् ।।

स मर्तो॑ अग्ने स्वनीक रे॒वानम॑र्त्ये॒ य आ॑जु॒होति॑ ह॒व्यं ।

स दे॒वता॑ वसु॒वनिं॑ दधाति॒ यं सू॒रिर॒र्थी पृ॒च्छमा॑न॒ एति॑ ॥२३

स॒ । मर्तः॑ । अ॒ग्ने॒ । सु॒ऽअ॒नी॒क॒ । रे॒वान् । अम॑र्त्ये । यः । आ॒ऽजु॒होति॑ । ह॒व्यम् ।

सः । दे॒वता॑ । व॒सु॒ऽवनि॑म् । द॒धा॒ति॒ । यम् । सू॒रिः । अ॒र्थी । पृ॒च्छमा॑नः । एति॑ ॥२३

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति । हव्यम् ।

सः । देवता । वसुऽवनिम् । दधाति । यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥२३

"स्वनीक सुतेजस्क हे "अग्ने अमर्त्ये अमनुष्ये देवतात्मनि त्वयि "हव्यं हविः "यः "आजुहोति "स "मर्तः मनुष्यः "रेवान् धनवान् भवति । "यं मर्त्यं "सूरिः प्राज्ञः "अर्थी धनादिकामः "पृच्छमानः असौ उदारः क्वास्ते' इति पृच्छन् "एति अभिगच्छति "सः एव मनुष्यः "देवता देवताभ्यः "वसुवनिं धनपोषं ददाति । यद्वा । स देवताग्निर्वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोता अर्थी प्रयोजनवान् पृच्छमानः कोऽसावग्निरिति पृच्छमान एति ।।

म॒हो नो॑ अग्ने सुवि॒तस्य॑ वि॒द्वान्र॒यिं सू॒रिभ्य॒ आ व॑हा बृ॒हंत॑म् ।

येन॑ व॒यं स॑हसाव॒न्मदे॒माविं॑क्षितास॒ आयु॑षा सु॒वीराः॑ ॥२४

म॒हः । न॒ः । अ॒ग्ने॒ । सु॒वि॒तस्य॑ । वि॒द्वान् । र॒यिम् । सू॒रिऽभ्यः॑ । आ । व॒ह॒ । बृ॒हन्त॑म् ।

येन॑ । व॒यम् । स॒ह॒सा॒ऽव॒न् । मदे॑म । अवि॑ऽक्षितासः । आयु॑षा । सु॒ऽवीराः॑ ॥२४

महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिम् । सूरिऽभ्यः । आ । वह । बृहन्तम् ।

येन । वयम् । सहसाऽवन् । मदेम । अविऽक्षितासः । आयुषा । सुऽवीराः ॥२४

हे "अग्ने "नः अस्मदीयस्य "महः महतः "सुवितस्य कल्याणस्य कर्मणः "विद्वान् । अस्मदीयं कल्याणं कर्म जानन्नित्यर्थः । त्वं "सूरिभ्यः स्तोतृभ्योऽस्मभ्यं "बृहन्तं महान्तं "रयिं धनम् "आ "वह । रयिमेव विशिनष्टि । हे "सहसावन् बलवन् अग्ने "येन धनेन "वयं स्तोतारः "अविक्षितासः अविक्षीणाः "आयुषा पूर्णायुषः "सुवीराः कल्याणपुत्रपौत्राश्च सन्तः "मदेम हृष्येम ।।

नू मे॒ ब्रह्मा॑ण्यग्न॒ उच्छ॑शाधि॒ त्वं दे॑व म॒घव॑द्भ्यः सुषूदः ।

रा॒तौ स्या॑मो॒भया॑स॒ आ ते॑ यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥२५

नु । मे॒ । ब्रह्मा॑णि । अ॒ग्ने॒ । उत् । श॒शा॒धि॒ । त्वम् । दे॒व॒ । म॒घव॑त्ऽभ्यः । सु॒सू॒द॒ः ।

रा॒तौ । स्या॒म॒ । उ॒भया॑सः । आ । ते॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥२५

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।

रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥२५

हे “अग्ने “मे मम मदर्थं “ब्रह्माणि अन्नानि “नु क्षिप्रम् “उच्छशाधि उत्कर्षेण शोधितानि कुरु । किंच हे “देव द्योतमानाग्ने “मघवद्भ्यः हविष्मद्भ्योऽस्मभ्यं सुषूदः अन्नानि प्रेरय । “ते त्वदीयायां “रातौ दाने “उभयासः स्तोत्रिणः शस्त्रिणश्च अथवा स्तुवन्तो यजमानाश्च वयम् “आ “स्याम अत्यर्थं भवेम । “नः अस्मान् “यूयं त्वत्परिवाराश्च सर्वे "स्वस्तिभिः अविनाशिभिर्मङ्गलैः । तथा च यास्कः– स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्ति' (निरु. ३. २१) इति । “सदा “पात रक्षत ॥ ॥ २६ ॥

---

**टिप्पणी**

७.१.१ अग्निं नरो इति

महावामदेव्यम् (https://sa.wikisource.org/s/2hvj)

# ऋग्वेदः सूक्तं ७.२

**ऋग्वेदः - मण्डल ७**

← सूक्तं ७.१ सूक्तं ७.२ सूक्तं ७.३ →

मैत्रावरुणिर्वसिष्ठः।

दे. आप्रीसूक्तं(१इध्मः समिद्धोऽग्निर्वा, २ नराशंसः, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः,६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतयः, ११ स्वाहाकृतयः। त्रिष्टुप्।

जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।
उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥१॥
नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥२॥
ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥३॥
सपर्यवो भरमाणा अभिज्ञु प्र वृञ्जते नमसा बर्हिरग्नौ ।
आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वम् ॥४॥
स्वाध्यो वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।
पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वञ्जन् ॥५॥
उत योषणे दिव्ये मही न उषासानक्ता सुदुघेव धेनुः ।
बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेताम् ॥६॥

विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।

ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥७॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।

सरस्वती सारस्वतेभिरर्वाक्तिस्रो देवीर्बर्हिरेदं सदन्तु ॥८॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।

यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥९॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।

सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥१०॥

आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।

बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥११॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

‘ जुषस्व नः' इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आप्रशब्दोक्तत्वादिदं तनूनपाद्रहितम् । समिद्धाद्या अग्निविशेषाः प्रत्यृचं देवता उक्ताः । तथा चानुक्रम्यते- जुषस्वैकादशाप्रम् इति । पशाविष्टाविदमाप्रीसूक्तम् । सूत्रितं च -- जुषस्व नः समिधमिति वसिष्ठानाम्' ( आश्व. श्रौ. ३. २) इति । पत्नीसंयाजे त्वष्ट्यागस्य याज्या त्वाष्ट्रे पशावपि पुरोडाशस्यानुवाक्येयमिति पूर्वमुक्तम् ॥

जु॒षस्व॑ नः स॒मिध॑मग्ने अ॒द्य शोचा॑ बृ॒हद्य॑ज॒तं धू॒ममृ॒ण्वन् ।

उप॑ स्पृश दि॒व्यं सानु॒ स्तूपै॒ः सं र॒श्मिभि॑स्ततन॒ः सूर्य॑स्य ॥१

जु॒षस्व॑ । न॒ः । स॒म्ऽइध॑म् । अ॒ग्ने॒ । अ॒द्य । शोच॑ । बृ॒हत् । य॒ज॒तम् । धू॒मम् । ऋ॒ण्वन् ।

उप॑ । स्पृ॒श॒ । दि॒व्यम् । सानु॑ । स्तूपैः॑ । सम् । र॒श्मिऽभिः॑ । त॒त॒न॒ः । सूर्य॑स्य ॥१

जुषस्व । नः । सम्ऽइधम् । अग्ने । अद्य । शोच । बृहत् । यजतम् । धूमम् । ऋण्वन् ।

उप । स्पृश । दिव्यम् । सानु । स्तूपैः । सम् । रश्मिऽभिः । ततनः । सूर्यस्य ॥१

हे “अग्ने “नः अस्माकं “समिधम् “अद्य “जुषस्व सेवस्व । “यजतं यजनीयं प्रशस्तं “धूमम् “ऋण्वन् प्रेरयन् “बृहत् अत्यन्तं “शोच दीप्यस्व च । किंच “दिव्यम् अन्तरिक्षभवं “सानु समुच्छ्रितं “स्तूपैः तप्तैः रश्मिभिः “उप “स्पृश । अपि च “सूर्यस्य रश्मिभिः तेजोभिः “सं “ततनः संगच्छस्व ॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।

ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥२

नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः ।

ये । सुऽक्रतवः । शुचयः । धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥२

नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः ।

ये । सुऽक्रतवः । शुचयः । धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥२

“ये "देवाः “सुक्रतवः सुप्रज्ञाः सुकर्माणो वा “शुचयः दीप्तिमन्तः “धियंधाः कर्मणां धारयितारः “उभयानि सौमिकानि च हविःसंस्थादीनि च “हव्या हव्यानि “स्वदन्ति स्वदयन्ति भक्षयन्ति तेषाम् “एषां मध्ये यज्ञैः हविर्भिः स्तोत्रैर्वा “यजतस्य यजनीयस्य “नराशंसस्य नरैः प्रशंसनीयस्य अग्निविशेषस्य “महिमानं महत्त्वम् “उप “स्तोषाम वयमुपस्तुमः । तथा च यास्कः - ‘ नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । तस्यैषा भवति । नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि च ' (निरु. ८. ६) इति ॥

ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।

मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥३

ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् । रोदसी इति । सत्यऽवाचम् ।

मनुष्वत् । अग्निम् । मनुना । सम्ऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥३

ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् । रोदसी इति । सत्यऽवाचम् ।

मनुष्वत् । अग्निम् । मनुना । सम्ऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥३

हे अध्वर्यवः “वः यूयम् “ईळेन्यं स्तुत्यम् "असुरं बलवन्तं "सुदक्षं सुप्रज्ञं "रोदसी रोदस्योः “अन्तः मध्ये "दूतं देवानां हविर्वहनार्थं चरन्तं “सत्यवाचं “मनुष्वत् मनुष्यवत् “मनुना “समिद्धं यथेदानीं मनुष्याः समिन्धते तथा पूर्वं मनुना प्रजापतिना समिद्धम् “अग्निम्

“अध्वराय यज्ञाय “सदमित् सदैव “सं “महेम संपूजयत । मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वम् ॥

स॒प॒र्यवो॒ भर॑माणा अभि॒ज्ञु प्र वृ॑ञ्जते॒ नम॑सा ब॒र्हिर॒ग्नौ ।

आ॒जुह्वा॑ना घृ॒तपृ॑ष्ठं॒ पृष॑द्व॒दध्व॑र्यवो ह॒विषा॑ मर्जयध्वम् ॥४

स॒प॒र्यवः॑ । भर॑माणाः । अ॒भि॒ऽज्ञु । प्र । वृ॒ञ्ज॒ते॒ । नम॑सा । ब॒र्हिः । अ॒ग्नौ ।

आ॒ऽजुह्वा॑नाः । घृ॒तऽपृ॑ष्ठम् । पृष॑त्ऽवत् । अध्व॑र्यवः । ह॒विषा॑ । म॒र्ज॒य॒ध्व॒म् ॥४

सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृञ्जते । नमसा । बर्हिः । अग्नौ ।

आऽजुह्वानाः । घृतऽपृष्ठम् । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वम् ॥४

“सपर्यवः परिचरणमिच्छन्तः "अभिज्ञु अभिगतजानुकं “भरमाणाः पादौ भरन्तः “बर्हिः “नमसा हविषा सह “अग्नौ “प्र “वृञ्जते प्रभरन्ति । तदेव विशदयति । हे “अध्वर्यवः “घृतपृष्ठं घृतसंसिक्तपृष्ठं "पृषद्वत् स्थूलबिन्दुभिर्युक्तं बर्हिः “हविषा सह "आजुह्वानाः “मर्जयध्वम् अग्निं परिचरत ।।

स्वा॒ध्यो॒३॒॑ वि दुरो॑ देव॒यन्तोऽशि॑श्रयू रथ॒युर्दे॒वता॑ता ।

पू॒र्वी शिशुं॒ न मा॒तरा॑ रिहा॒णे सम॒ग्रुवो॒ न सम॑नेष्वञ्जन् ॥५

सु॒ऽआ॒ध्यः॑ । वि । दुरः॑ । दे॒व॒ऽयन्तः॑ । अशि॑श्रयुः । र॒थ॒ऽयुः । दे॒वऽता॑ता ।

पू॒र्वी इति॑ । शिशु॑म् । न । मा॒तरा॑ । रि॒हा॒णे इति॑ । सम् । अ॒ग्रुवः॑ । न । सम॑नेषु । अ॒ञ्ज॒न् ॥५

सुऽआध्यः । वि । दुरः । देवऽयन्तः । अशिश्रयुः । रथऽयुः । देवऽताता ।

पूर्वी इति । शिशुम् । न । मातरा । रिहाणे इति । सम् । अग्रुवः । न । समनेषु । अञ्जन् ॥५

"स्वाध्यः सुकर्माणः "देवयन्तः देवकामा यजमानाः “रथयुः रथकामाश्च ।। जसि पूर्वसवर्णो ह्रस्वश्च ॥ “देवताता देवतातौ यज्ञे “दुरः यज्ञगृहद्वाराणि "वि “अशिश्रयुः आश्रितवन्तः । किंच “समनेषु यज्ञेषु “पूर्वी प्राचीने प्रागग्रे जुहूपभृतौ “शिशुं “न वत्समिव मातरौ गावौ “रिहाणे अग्निं लिहाने “अग्रुवो “न यथा नद्यः क्षेत्राण्युदकेन तद्वत् “सम् “अञ्जन् अध्वर्यवः आज्येन समञ्जन्ति ॥ ॥ १ ॥

उ॒त योष॑णे दि॒व्ये म॒ही न॑ उ॒षासा॒नक्ता॑ सु॒दुघे॑व धे॒नुः ।

ब॒र्हि॒षदा॑ पुरुहू॒ते म॒घोनी॒ आ य॒ज्ञिये॑ सुवि॒ताय॑ श्रयेताम् ॥६

उ॒त । योष॑णे॒ इति॑ । दि॒व्ये इति॑ । म॒ही इति॑ । नः॒ । उ॒षसा॒नक्ता॑ । सु॒दुघा॑ऽइव । धे॒नुः ।

ब॒र्हि॒ऽसदा॑ । पु॒रु॒हू॒ते इति॑ पु॒रु॒ऽहू॒ते । म॒घोनी॒ इति॑ । आ । य॒ज्ञिये॒ इति॑ । सु॒वि॒ताय॑ । श्र॒ये॒ता॒म् ॥६

उत । योषणे इति । दिव्ये इति । मही इति । नः । उषसानक्ता । सुदुघाऽइव । धेनुः ।

बर्हिऽसदा । पुरुहूते इति पुरुऽहूते । मघोनी इति । आ । यज्ञिये इति । सुविताय । श्रयेताम् ॥६

"उत अपि च "योषणे युवत्यौ स्त्रीरूपे वा "दिव्ये दिवि भवे "मही महत्यौ। "बर्हिषदा बर्हिषि सीदन्त्यौ "पुरुहूते बहुभिः स्तुते "मघोनी धनवत्यौ "यज्ञिये यज्ञार्हे "उषासानक्ता अहोरात्रे "सुदुघेव "धेनुः कामधुग्धेनुरिव "नः अस्मान् "सुविताय कल्याणाय "आ "श्रयेताम् ॥

विप्रा॑ य॒ज्ञेषु॒ मानु॑षेषु का॒रू मन्ये॑ वां जा॒तवे॑दसा॒ यज॑ध्यै ।

ऊ॒र्ध्वं नो॑ अध्व॒रं कृ॑तं॒ हवे॑षु॒ ता दे॒वेषु॑ वनथो॒ वार्या॑णि ॥७

विप्रा॑ । य॒ज्ञेषु॑ । मानु॑षेषु । का॒रू इति॑ । मन्ये॑ । वा॒म् । जा॒तऽवे॑दसा । यज॑ध्यै ।

ऊ॒र्ध्वम् । नः॒ । अ॒ध्व॒रम् । कृ॒त॒म् । हवे॑षु । ता । दे॒वेषु॑ । व॒न॒थः॒ । वार्या॑णि ॥७

विप्रा । यज्ञेषु । मानुषेषु । कारू इति । मन्ये । वाम् । जातऽवेदसा । यजध्यै ।

ऊर्ध्वम् । नः । अध्वरम् । कृतम् । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥७

हे दैव्या होतारौ "विप्रा मेधाविनौ "जातवेदसा जातधनौ "मानुषेषु मनुष्यैः क्रियमाणेषु "यज्ञेषु "कारू कर्मणां कर्तारौ "वां युवां "यजध्यै यष्टुं "मन्ये स्तौमि । किंच "हवेषु हवनेषु स्तोत्रेषु सत्सु "नः अस्माकम् "अध्वरम् अकुटिलं यज्ञम् "ऊर्ध्वं देवाभिमुखं "कृतं कुरुतं च । अपि च "ता तौ युवां "देवेषु विद्यमानानि "वार्याणि धनानि "वनथः संभजथः । तान्यस्मभ्यं संप्रयच्छथ इत्यर्थः।।

आ भार॑ती॒ भार॑तीभिः स॒जोषा॒ इळा॑ दे॒वैर्म॑नु॒ष्ये॑भिर॒ग्निः ।

सर॑स्वती सारस्व॒तेभि॑र॒र्वाक्ति॒स्रो दे॒वीर्ब॒र्हिरेदं स॑दन्तु ॥८

आ । भार॑ती । भार॑तीभिः । स॒ऽजोषाः॑ । इळा॑ । दे॒वैः । म॒नु॒ष्ये॑भिः । अ॒ग्निः ।

सर॑स्वती । सा॒र॒स्व॒तेभिः॑ । अ॒र्वाक् । ति॒स्रः । दे॒वीः । ब॒र्हिः । आ । इ॒दम् । स॒द॒न्तु॒ ॥८

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।

सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥८

एतदाद्यृक्चतुष्टयं द्वितीयाष्टकस्याष्टमाध्याये (ऋ. सं. ३. ४. ८-११ ) यद्यपि व्याख्यातं तथापि व्यवधानात् संक्षेपतोऽत्रापि व्याख्यायते । "भारती भरतस्यादित्यस्य पत्नी "भारतीभिः "सजोषाः सहिता "इळा "मनुष्येभिः मनुष्यलोकभवैः "देवैः सार्धम्

“अग्निः “आ गच्छतु । “सरस्वती “सारस्वतेभिः सारस्वतैः मध्यमस्थानैर्देवैः सार्धम् “अर्वाक् अस्मदभिमुखमागच्छतु । आगत्य “तिस्रो "देवीः देव्यः ॥ प्रथमार्थे द्वितीया ॥ “बर्हिः “इदम् “आ “सदन्तु ॥

तन्न॑स्तु॒रीप॒मध॑ पोषयि॒त्नु देव॑ त्वष्ट॒र्वि र॑रा॒णः स्यं॑स्व ।

यतो॑ वी॒रः क॑र्म॒ण्य॑ः सु॒दक्षो॑ यु॒क्तग्रा॑वा॒ जाय॑ते दे॒वका॑मः ॥९

तत् । न॒ः । तु॒रीप॑म् । अध॑ । पो॒ष॒यि॒त्नु । देव॑ । त्व॒ष्ट॒ः । वि । र॒रा॒णः । स्य॒स्वेति॑ स्यस्व ।

यत॑ः । वी॒रः । क॒र्म॒ण्य॑ः । सु॒ऽदक्ष॑ः । यु॒क्तऽग्रा॑वा । जाय॑ते । दे॒वऽका॑मः ॥९

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।

यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥९

“देव द्योतमान हे “त्वष्टः “रराणः रममाणस्त्वं “नः अस्माकं “तुरीपं त्वरितमाप्लुवत् “पोषयित्नु पोषकरं “तत रेतः “वि “स्यस्व विशेषेणावसानं प्रापय । विमोचयेत्यर्थः । “यतः रेतसः “कर्मण्यः कर्मसु साधुः “सुदक्षः सुबलः "युक्तग्रावा सोमसुत् "देवकामः “वीरः पुत्रः “जायते ॥

वन॑स्प॒तेऽव॑ सृ॒जोप॑ दे॒वान॒ग्निर्ह॒विः श॑मि॒ता सू॑दयाति ।

सेदु॒ होता॑ स॒त्यत॑रो यजाति॒ यथा॑ दे॒वाना॒ं जनि॑मानि॒ वेद॑ ॥१०

वन॑स्पते । अव॑ । सृ॒ज॒ । उप॑ । दे॒वान् । अ॒ग्निः । ह॒विः । श॒मि॒ता । सू॒द॒या॒ति॒ ।

सः । इत् । उ॒ँ इति॑ । होता॑ । स॒त्यऽत॑रः । य॒जा॒ति॒ । यथा॑ । दे॒वाना॑म् । जनि॑मानि । वेद॑ ॥१०

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।

सः । इत् । ऊं इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥१०

हे “वनस्पते “देवान् “उप “अव “सृज । अथ परोक्षस्तुतिः । “अग्निः वनस्पतिः “शमिता शामित्ररूपः सन् “हविः “सूदयाति प्रेरयतु । “सेत् स एव वनस्पतिः “होता देवानामाह्वाता “सत्यतरः अपि सन् “यजाति यजतु । “देवानां “जनिमानि जननानि “यथा स्वयं “वेद तथा ॥

आ या॑ह्यग्ने समिधा॒नो अ॒र्वाङिन्द्रे॑ण दे॒वैः स॒रथं॑ तु॒रेभि॑ः ।

ब॒र्हिर्न॑ आस्ता॒मदि॑तिः सुपु॒त्रा स्वाहा॑ दे॒वा अ॒मृता॑ मादयन्ताम् ॥११

आ । या॒हि॒ । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । अ॒र्वाङ् । इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । तु॒रेभिः॑ ।

ब॒र्हिः । नः॒ । आ॒स्ता॒म् । अदि॑तिः । सु॒ऽपु॒त्रा । स्वाहा॑ । दे॒वाः । अ॒मृताः॑ । मा॒द॒य॒न्ता॒म् ॥११

आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः । सऽरथम् । तुरेभिः ।

बर्हिः । नः । आस्ताम् । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥११

हे "अग्ने "समिधानः "अर्वाक् अस्मदभिमुखस्त्वम् "इन्द्रेण "तुरेभिः त्वरितैः "देवैः च "सरथं समानरथं यथा भवति तथा "आ "याहि आगच्छ । "नः अस्माकं "बर्हिः अधि "आस्ताम् "अदितिः च "सुपुत्रा कल्याणपुत्रा । "स्वाहा "देवाः च सर्वे "अमृताः सन्तः "मादयन्ताम् इति ॥ ॥ ३ ॥

---

**टिप्पणी**

७.२.२ नराशंसस्य महिमानमेषाम् इति

नराशंसोपरि टिप्पणी (http://puranastudy.000space.com/pur_index15/narashamsha.htm)

नराशंसोपरि टिप्पणी (http://www.angelfire.com/indie/veda_study/pur_index15/narashamsha.htm) (दर्पणं)

According to Sayana (RV I.13), there are 12 āprī sukta. Of the ten āprī sukta, Ṛgveda commented by Gargya Narayana, RV I.13 and I.142 invoke Narāśaṁsa and Tanūnapāt manifestations of Agni. RV I.188, III.4, IX.5 and X.110 invoke only Tanūnapāt manifestation. RV II.3, V.5, VII.2 and X.70 invoke only Narāśaṁsa manifestation.

इध्मः

ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते । पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।। वराहपुराणम् १८.२६ ।। ध्मा शब्दस्य विनियोजनं प्रायः अयसः ध्मानाय एव भवति। किन्तु अत्र प्रपूरणे अस्ति। यथा उल्लिखितमस्ति, इध्मस्य उन्नतं रूपं समित् अस्ति। समित् अर्थात् समिति, सममिति। अस्मिन् जगते सममितेः ह्रासं अस्ति, येन कारणेन सममितेः प्रपूरणाय वयं भोजनं कुर्वामः। सममितेः आधुनिकं व्याख्या श्री गोवान (http://johnagowan.org/a

# ऋग्वेदः सूक्तं ७.३

ऋग्वेदः - मण्डल ७
← सूक्तं ७.२ सूक्तं ७.३ सूक्तं ७.४ →
मैत्रावरुणिर्वसिष्ठः।

दे. अग्निः। त्रिष्टुप्।

---

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविरृतावा तपुर्मूर्धा घृतान्नः पावकः ॥१॥
प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥२॥
उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः ।
अच्छा द्यामरुषो धूम एति सं दूतो अग्न ईयसे हि देवान् ॥३॥
वि यस्य ते पृथिव्यां पाजो अश्रेत्तृषु यदन्ना समवृक्त जम्भैः ।
सेनेव सृष्टा प्रसितिष्ट एति यवं न दस्म जुह्वा विवेक्षि ॥४॥
तमिद्दोषा तमुषसि यविष्ठमग्निमत्यं न मर्जयन्त नरः ।
निशिशाना अतिथिमस्य योनौ दीदाय शोचिराहुतस्य वृष्णः ॥५॥
सुसंदृक्ते स्वनीक प्रतीकं वि यद्रुक्मो न रोचस उपाके ।
दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि भानुम् ॥६॥

यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च हव्यैः ।

तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥७॥

या वा ते सन्ति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।

ताभिर्नः सूनो सहसो नि पाहि स्मत्सूरीञ्जरितॄञ्जातवेदः ॥८॥

निर्यत्पूतेव स्वधितिः शुचिर्गात्स्वया कृपा तन्वा रोचमानः ।

आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥९॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।

विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥१०॥

**सायणभाष्यम्**

' अग्निं वो देवम् ' इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रेयानुक्रमणिका' अग्निं वो दश' इति । अग्निं वो देवम्' इत्येतदादीनि दश सूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे व विनियुक्तानि । सूत्रितं च- अग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेत्' ( आश्व. श्रौ. ४.१३) इति । व्यूळ्हे दशरात्रेऽष्टमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्र्यते हि -- द्वितीयस्याग्निं वो देवमित्याज्यम्' (आश्व. श्रौ. ८.१०) इति ।।

अ॒ग्निं वो॑ दे॒वम॒ग्निभिः॑ स॒जोषा॒ यजि॑ष्ठं दू॒तम॑ध्व॒रे कृ॑णुध्वं ।

यो मर्त्ये॑षु॒ निध्रु॑विर्ऋ॒तावा॒ तपु॑र्मूर्धा घृ॒तान्नः॑ पाव॒कः ॥१

अ॒ग्निम् । व॒: । दे॒वम् । अ॒ग्निऽभिः॑ । स॒ऽजोषाः॑ । यजि॑ष्ठम् । दू॒तम् । अ॒ध्व॒रे । कृ॒णु॒ध्व॒म् ।

यः । मर्त्ये॑षु । निऽध्रु॑विः । ऋ॒तऽवा॑ । तपुः॑ऽमूर्धा । घृ॒तऽअ॑न्नः । पा॒व॒कः ॥१

अग्निम् । वः । देवम् । अग्निऽभिः । सऽजोषाः । यजिष्ठम् । दूतम् । अध्वरे । कृणुध्वम् ।

यः । मर्त्येषु । निऽध्रुविः । ऋतऽवा । तपुःऽमूर्धा । घृतऽअन्नः । पावकः ॥१

हे देवाः "वः यूयं "देवं द्योतमानम् "अग्निभिः अन्यैरग्निभिः "सजोषाः सजोषसं सहितम् । द्वितीयार्थे प्रथमा । "यजिष्ठं यष्टृतमम् "अग्निम् "अध्वरे कौटिल्यरहिते यज्ञे "दूतं "कृणुध्वं कुरुत । "यः अग्निर्देवोऽपि सन् "मर्त्येषु "निध्रुविः नितरां ध्रुवस्तिष्ठति "ऋतावा यज्ञवान् सत्यवान् वा "तपुर्मूर्धा तापकतेजाः "घृतान्नः "पावकः शोधकश्च भवति ॥

प्रोथ॒दश्वो॒ न यव॑सेऽवि॒ष्यन्य॒दा म॒हः सं॒वर॑णा॒द्व्यस्था॑त् ।

आद॑स्य॒ वातो॒ अनु॑ वाति शो॒चिरध॑ स्म ते॒ व्रज॑नं कृ॒ष्णम॑स्ति ॥२

प्रोथ॑त् । अश्वः॑ । न । यव॑से । अ॒वि॒ष्यन् । य॒दा । म॒हः । स॒म्ऽवर॑णात् । वि । अस्था॑त् ।

आत् । अ॒स्य॒ । वातः॑ । अनु॑ । वा॒ति॒ । शो॒चिः । अध॑ । स्म॒ । ते॒ । व्रज॑नम् । कृ॒ष्णम् । अ॒स्ति॒ ॥२

प्रोथत् । अश्वः । न । यवसे । अविष्यन् । यदा । महः । सम्ऽवरणात् । वि । अस्थात् ।

आत् । अस्य । वातः । अनु । वाति । शोचिः । अध । स्म । ते । व्रजनम् । कृष्णम् । अस्ति ॥२

“यवसे घासे “अविष्यन् भक्षयन् “प्रोथत् शब्दं कुर्वन् संचरन् वा “अश्वो न अश्व इव “महः महतः “संवरणात् निरोधात् दावरूपोऽग्निः “यदा “व्यस्थात संततेषु वृक्षेषु वितिष्ठते “आत् तदा “अस्य अग्नेः “शोचिः अर्चिः “अनु “वातः “वाति । अथ प्रत्यक्षस्तुतिः । “अध अनन्तरं हे अग्ने “ते तव “व्रजनं वर्त्म "कृष्णमस्ति भवति । “स्म इति पूरणः ॥

उद्यस्य॑ ते॒ नव॑जातस्य॒ वृष्णोऽग्ने॒ चर॑न्त्य॒जरा॑ इधा॒नाः ।

अच्छा॒ द्याम॑रु॒षो धू॒म ए॑ति॒ सं दू॒तो अ॑ग्न॒ ईय॑से॒ हि दे॒वान् ॥३

उत् । यस्य॑ । ते॒ । नव॑ऽजातस्य । वृष्णः॑ । अग्ने॑ । चर॑न्ति । अ॒जराः॑ । इ॒धा॒नाः ।

अच्छ॑ । द्याम् । अ॒रु॒षः । धू॒मः । ए॒ति॒ । सम् । दू॒तः । अ॒ग्ने॒ । ईय॑से । हि । दे॒वान् ॥३

उत् । यस्य । ते । नवऽजातस्य । वृष्णः । अग्ने । चरन्ति । अजराः । इधानाः ।

अच्छ । द्याम् । अरुषः । धूमः । एति । सम् । दूतः । अग्ने । ईयसे । हि । देवान् ॥३

हे “अग्ने “नवजातस्य नवप्रादुर्भावस्य “वृष्णः वर्षितुः “यस्य “ते तव “अजराः जरारहिता ज्वालाः “इधानाः "उत् “चरन्ति उद्गच्छन्ति अस्य “अरुषः आरोचमानः “धूमः “द्याम् “अच्छ दिवमभि “एति गच्छति । हे “अग्ने त्वं "दूतः सन् "देवान् “सम् "ईयसे हि संप्राप्नोषि च ॥

वि यस्य॑ ते पृथि॒व्यां पाजो॒ अश्रे॑त्तृ॒षु यदन्ना॑ स॒मवृ॑क्त॒ जंभैः॑ ।

सेनें॑व सृ॒ष्टा प्रसि॑तिष्ट एति॒ यवं॒ न द॑स्म जु॒ह्वा॑ विवेक्षि ॥४

वि । यस्य॑ । ते॒ । पृ॒थि॒व्याम् । पाजः॑ । अश्रे॑त् । तृ॒षु । यत् । अन्ना॑ । स॒म्ऽअवृ॑क्त । जम्भैः॑ ।

सेना॑ऽइव । सृ॒ष्टा । प्रऽसि॑तिः । ते॒ । ए॒ति॒ । यव॑म् । न । द॒स्म॒ । जु॒ह्वा॑ । वि॒वे॒क्षि॒ ॥४

वि । यस्य । ते । पृथिव्याम् । पाजः । अश्रेत् । तृषु । यत् । अन्ना । सम्ऽअवृक्त । जम्भैः ।

सेनाऽइव । सृष्टा । प्रऽसितिः । ते । एति । यवम् । न । दस्म । जुह्वा । विवेक्षि ॥४

हे अग्ने “यस्य दावरूपस्य “ते तव “पाजः तेजः “पृथिव्यां भूम्यां “तृषु क्षिप्रं “वि “अश्रेत् विश्रयति “यत् यदा अन्नानि काष्ठादीनि “जम्भैः दन्तैः । ज्वालाभिरित्यर्थः । “समवृक्त वृङ्क्ते खादति । तथा “सेनेव “सृष्टा उद्युक्ता “ते तव “प्रसितिः ज्वाला “एति गच्छति । “दस्म हे दर्शनीयाग्ने त्वं “यवं “न यवमिव “जुह्वा ज्वालया “विवेक्षि काष्ठादीनि भक्षयसि व्याप्नोषि वा ॥

तमिद्दो॒षा तमु॒षसि॑ यवि॑ष्ठम॒ग्निमत्यं॒ न म॑र्जयंत॒ नरः॑ ।

नि॒शिशा॑ना॒ अति॑थिमस्य॒ योनौ॑ दी॒दाय॑ शो॒चिराहु॑तस्य॒ वृष्णः॑ ॥५

तम् । इत् । दो॒षा । तम् । उ॒षसि॑ । यवि॑ष्ठम् । अ॒ग्निम् । अत्य॑म् । न । म॒र्ज॒य॒न्त॒ । नरः॑ ।

नि॒ऽशिशा॑नाः । अति॑थिम् । अ॒स्य॒ । योनौ॑ । दी॒दाय॑ । शो॒चिः । आऽहु॑तस्य । वृष्णः॑ ॥५

तम् । इत् । दोषा । तम् । उषसि । यविष्ठम् । अग्निम् । अत्यम् । न । मर्जयन्त । नरः ।

निऽशिशानाः । अतिथिम् । अस्य । योनौ । दीदाय । शोचिः । आऽहुतस्य । वृष्णः ॥५

“यविष्ठं युवतमम् “अतिथिम् अतिथिवत् पूज्यं “तमित् तमेव “अग्निं “दोषा दोषायां रात्रौ “उषसि वासरेऽपि “तम् एव “अस्य अग्नेः “योनौ स्थाने आहवनीयायतने धिष्ण्ये वा “निशिशानाः दीपयन्तः “नरः मनुष्याः “अत्यं “न सततगमनयुक्तं वोढारमश्वमिव “मर्जयन्त परिचरन्ति । “आहुतस्य च 'वृष्णः कामानां वर्षितुरग्नेस्तस्य “शोचिः ज्वाला "दीदाय दीप्यते ॥ ॥ ३ ॥

सु॒सं॒दृक्ते॑ स्वनीक॒ प्रती॑कं॒ वि यद्रु॒क्मो न रोच॑स उपा॒के ।

दि॒वो न ते॑ तन्य॒तुरे॑ति॒ शुष्म॑श्चि॒त्रो न सूरः॒ प्रति॑ चक्षि भा॒नुं ॥६

सु॒ऽस॒न्दृक् । ते॒ । सु॒ऽअ॒नी॒क॒ । प्रती॑कम् । वि । यत् । रु॒क्मः । न । रोच॑से । उ॒पा॒के ।

दि॒वः । न । ते॒ । त॒न्य॒तुः । ए॒ति॒ । शुष्मः॑ । चि॒त्रः । न । सूरः॑ । प्रति॑ । च॒क्षि॒ । भा॒नुम् ॥६

सुऽसन्दृक् । ते । सुऽअनीक । प्रतीकम् । वि । यत् । रुक्मः । न । रोचसे । उपाके ।

दिवः । न । ते । तन्यतुः । एति । शुष्मः । चित्रः । न । सूरः । प्रति । चक्षि । भानुम् ॥६

“स्वनीक हे सुतेजस्काग्ने त्वं “यत् यदा “रुक्मो “न सूर्य इव । सुवर्णमिव वा । “उपाके अन्तिके “वि “रोचसे विशेषेण दीप्यसे तदा “ते तव “प्रतीकं रूपमङ्गं वा "सुसंदृक् सुसंदर्शनं भवति । किंच “ते तव “शुष्मः “दिवः अन्तरिक्षात् “तन्यतुः “न अशनिरिव एति निर्गच्छति । “चित्रः दर्शनीयः “सूरः “न सूर्य इव “भानुं स्वां दीप्तिं “प्रति “चक्षि प्रदर्शयसि ।।

यथा॑ वः॒ स्वाहा॒ग्नये॒ दाशे॑म॒ परीळा॑भिर्घृ॒तव॑द्भिश्च ह॒व्यैः ।

तेभि॑र्नो अग्ने॒ अमि॑तै॒र्महो॑भिः श॒तं पू॒र्भिराय॑सीभि॒र्नि पा॑हि ॥७

यथा॑ । व॒ः । स्वाहा॑ । अ॒ग्नये॑ । दाशे॑म । परि॑ । इळा॑भिः । घृ॒तव॑त्ऽभिः । च॒ । ह॒व्यैः ।

तेभिः॑ । न॒ः । अ॒ग्ने॒ । अमि॑तैः । महः॑ऽभिः । श॒तम् । पू॒ःऽभिः । आय॑सीभिः । नि । पा॒हि॒ ॥7

यथा । वः । स्वाहा । अग्नये । दाशेम । परि । इळाभिः । घृतवत्ऽभिः । च । हव्यैः ।

तेभिः । नः । अग्ने । अमितैः । महःऽभिः । शतम् । पूःऽभिः । आयसीभिः । नि । पाहि ॥7

हे “अग्ने “अग्नये अग्रस्य नेत्रे "वः तुभ्यं “स्वाहा स्वाहुतं हविः । किंच यथा वयम् “इळाभिः । गोभिर्गोविकारैः क्षीरादिभिः “घृतवद्भिः घृतसहितैः “हव्यैः पुरोडाशादिभिः “च “दाशेम परिचरेम तथा त्वमपि “तेभिः प्रसिद्धैः “अमितैः अपरिमितैः “महोभिः तेजोभिः “शतम् अपरिमिताभिः “आयसीभिः हिरण्मयीभिः । “ रुक्मम् अयः' इति हिरण्यनामसु पाठात् । “पूर्भिः नगरीभिरिव “नः अस्मान् “नि पाहि नितरां रक्ष ॥

या वां॑ ते॒ संति॑ दा॒शुषे॒ अधृ॑ष्टा॒ गिरो॑ वा॒ याभि॑र्नृ॒वती॑रुरु॒ष्याः ।

ताभि॑र्नः सूनो सहसो॒ नि पा॑हि॒ स्मत्सू॒रीञ्ज॑रि॒तॄंजा॑तवेदः ॥८

याः । वा॒ । ते॒ । सन्ति॑ । दा॒शुषे॑ । अधृ॑ष्टाः । गिरः॑ । वा॒ । याभिः॑ । नृ॒ऽवतीः॑ । उ॒रु॒ष्याः ।

ताभिः॑ । न॒ः । सू॒नो॒ इति॑ । स॒ह॒स॒ः । नि । पा॒हि॒ । स्मत् । सू॒रीन् । ज॒रि॒तॄन् । जा॒त॒ऽवे॒द॒ः ॥८

याः । वा । ते । सन्ति । दाशुषे । अधृष्टाः । गिरः । वा । याभिः । नृऽवतीः । उरुष्याः ।

ताभिः । नः । सूनो इति । सहसः । नि । पाहि । स्मत् । सूरीन् । जरितॄन् । जातऽवेदः ॥८

“सहसः “सूनो हे बलस्य पुत्र “जातवेदः अग्ने “दाशुषे दाशुषः “ते तव “याः “वा याश्च ज्वालाः “सन्ति । “अधृष्टाः रक्षोभिः अप्रधृषिताः “गिरो “वा गिरश्च सन्ति । "याभिः गीर्भिः “नृवतीः पुत्रवतीः प्रजाः “उरुष्याः रक्षेः । “ताभिः उभयीभिः “नः अस्मान् । “स्मत् इति प्रशस्तवचनः । प्रशस्तान् “सूरीन् हविषां प्रेरकान् “जरितॄन् स्तोतॄंश्च “नि “पाहि नितरां रक्ष ॥

निर्यत्पू॒तेव॒ स्वधि॑ति॒ः शुचि॒र्गात्स्वया॑ कृ॒पा त॒न्वा॒३॒ रोच॑मानः ।

आ यो मा॒त्रोरु॒शेन्यो॒ जनि॑ष्ट देव॒यज्या॑य सु॒क्रतुः॑ पाव॒कः ॥९

निः । यत् । पू॒ताऽइ॑व । स्वऽधि॑तिः । शुचिः॑ । गात् । स्वया॑ । कृ॒पा । त॒न्वा॑ । रोच॑मानः ।

आ । यः । मा॒त्रोः । उ॒शेन्यः॑ । जनि॑ष्ट । दे॒व॒ऽयज्या॑य । सु॒ऽक्रतुः॑ । पा॒व॒कः ॥९

निः । यत् । पूताऽइव । स्वऽधितिः । शुचिः । गात् । स्वया । कृपा । तन्वा । रोचमानः ।

आ । यः । मात्रोः । उशेन्यः । जनिष्ट । देवऽयज्याय । सुऽक्रतुः । पावकः ॥९

“यत् यदा “शुचिः अग्निः “स्वया स्वकीयया “तन्वा ततया “कृपा कृपया दीप्त्या “रोचमानः “पूतेव “स्वधितिः तीक्ष्णीकृता स्वधितिरिव “निः “गात् काष्ठान्निर्गच्छति तदानीं “देवयज्याय भवति । तदेव विशदयति । “यः अग्निः “उशेन्यः कमनीयः “सुक्रतुः सुकर्मा “पावकः शोधकश्च “मात्रोः अरण्योः “आ “जनिष्ट आजायत स देवयज्याय भवतीति ॥

ए॒ता नो॑ अग्ने॒ सौभ॑गा दिदी॒ह्यपि॒ क्रतुं॑ सु॒चेत॑सं वतेम ।

विश्वा॑ स्तो॒तृभ्यो॑ गृण॒ते च॑ संतु यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥१०

ए॒ता । न॒ः । अ॒ग्ने॒ । सौभ॑गा । दि॒दी॒हि॒ । अपि॑ । क्रतु॑म् । सु॒ऽचेत॑सम् । व॒ते॒म॒ ।

विश्वा॑ । स्तो॒तृऽभ्य॑ः । गृ॒ण॒ते । च॒ । स॒न्तु॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥१०

एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुम् । सुऽचेतसम् । वतेम ।

विश्वा । स्तोतृऽभ्यः । गृणते । च । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१०

हे “अग्ने “एता एतानि परिदृश्यमानानि “सौभगा सौभगानि शोभनानि धनानि “नः अस्मभ्यं “दिदीहि दीपय देहि वा । “अपि अपि च “क्रतुं कर्म यज्ञानां कर्तारं वा “सुचेतसं शोभनप्रज्ञानयुक्तं सुप्रज्ञानं पुत्रं वा “वतेम संभजेमहि ॥ वनतेः संभजनार्थस्य वर्णान्तरागमे सति रूपम् ॥ “विश्वा विश्वानि धनानि “स्तोतृभ्यः उद्गातृभ्यः “गृणते शंसते “च “सन्तु । “यूयं त्वत्परिवाराश्च सर्वे यूयं नः अस्मान् “स्वस्तिभिः क्षेमैः “सदा सर्वदा “पात रक्षत ॥ ॥ ४ ॥

# ऋग्वेदः सूक्तं ७.४

**ऋग्वेदः - मण्डल ७**

← सूक्तं ७.३ सूक्तं ७.४ सूक्तं ७.५ →

मैत्रावरुणिर्वसिष्ठः।

दे. अग्निः। त्रिष्टुप्।

---

प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥१॥
स गृत्सो अग्निस्तरुणश्चिदस्तु यतो यविष्ठो अजनिष्ट मातुः ।
सं यो वना युवते शुचिदन्भूरि चिदन्ना समिदत्ति सद्यः ॥२॥
अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे ।
नि यो गृभं पौरुषेयीमुवोच दुरोकमग्निरायवे शुशोच ॥३॥
अयं कविरकविषु प्रचेता मर्तेष्वग्निरमृतो नि धायि ।
स मा नो अत्र जुहुरः सहस्वः सदा त्वे सुमनसः स्याम ॥४॥
आ यो योनिं देवकृतं ससाद क्रत्वा ह्यग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥५॥
ईशे ह्यग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः ।
मा त्वा वयं सहसावन्नवीरा माप्सवः परि षदाम मादुवः ॥६॥

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।

न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥७॥

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।

अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥८॥

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।

सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयि स्पृहयाय्यः सहस्री ॥९॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।

विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥१०॥

**सायणभाष्यम्**

'प्र वः शुक्राय' इति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्र वः' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयत्वेनोक्तः सूक्तविनियोगः । एकादशिन आग्नेये पशौ ' प्र वः शुक्राय' इत्येषा वपाया याज्या । सूत्रितं च----' प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः' ( आश्व. श्रौ. ३.७) इति ।।

प्र वः॑ शु॒क्राय॑ भा॒नवे॑ भरध्वं ह॒व्यं म॒तिं चा॒ग्नये॒ सुपू॑तं ।

यो दैव्या॑नि॒ मानु॑षा ज॒नूंष्यं॒तर्विश्वा॑नि वि॒द्मना॒ जिगा॑ति ॥१

प्र । व॒ः । शु॒क्राय॑ । भा॒नवे॑ । भ॒र॒ध्व॒म् । ह॒व्यम् । म॒तिम् । च॒ । अ॒ग्नये॑ । सुऽपू॑तम् ।

यः । दैव्या॑नि । मानु॑षा । ज॒नूंषि॑ । अ॒न्तः । विश्वा॑नि । वि॒द्मना॑ । जिगा॑ति ॥१

प्र । वः । शुक्राय । भानवे । भरध्वम् । हव्यम् । मतिम् । च । अग्नये । सुऽपूतम् ।

यः । दैव्यानि । मानुषा । जनूंषि । अन्तः । विश्वानि । विद्मना । जिगाति ॥१

हे हविषां वोढारः "वः यूयं "शुक्राय शुभ्राय "भानवे दीप्ताय "अग्नये सुपूतं सुशुद्धं "हव्यं "मतिं स्तुतिं च "प्र "भरध्वम् । "यः अग्निः "दैव्यानि "मानुषा मानुषाणि च "विश्वानि "जनूंषि जातानि "अन्तः अन्तरा "विद्मना प्रज्ञानेन मार्गेण वा "जिगाति गच्छति । देवान् मनुष्यांश्च अन्तरा हवींषि नेतुं वर्तत इत्यर्थः ॥

स गृत्सो॑ अ॒ग्निस्तरु॑णश्चिदस्तु॒ यतो॒ यवि॑ष्ठो॒ अज॑निष्ट मा॒तुः ।

सं यो वना॑ यु॒वते॒ शुचि॑द॒न्भूरि॑ चि॒दन्ना॒ समिद॑त्ति स॒द्यः ॥२

सः । गृत्सः॑ । अ॒ग्निः । तरु॑णः । चि॒त् । अ॒स्तु॒ । यतः॑ । यवि॑ष्ठः । अज॑निष्ट । मा॒तुः ।

सम् । यः । वना॑ । यु॒वते॑ । शुचि॑ऽदन् । भूरि॑ । चि॒त् । अन्ना॑ । सम् । इत् । अ॒त्ति॒ । स॒द्यः ॥२

सः । गृत्सः । अग्निः । तरुणः । चित् । अस्तु । यतः । यविष्ठः । अजनिष्ट । मातुः ।

सम् । यः । वना । युवते । शुचिऽदन् । भूरि । चित् । अन्ना । सम् । इत् । अत्ति । सद्यः ॥२

“सः “चित् स एव “गृत्सः मेधावी । तथा च यास्कः- गृत्स इति मेधाविनाम' ( निरु. ९.५)। "अग्निः “तरुणः तारको भवति । तदा “यतः यदा “मातुः अरण्याः “यविष्ठः युवतमः सन् "अजनिष्ट । "यः अग्निः “शुचिदन् दीप्तदन्तः “वना वनानि “सं “युवते आत्मना संयोजयति । किंच “भूरि “चित् भूरीण्यपि “अन्ना स्वीयान्यन्नानि “सद्यः “इत् सद्य एव “सम् “अत्ति सम्यक् भक्षयति ॥ ।

अ॒स्य दे॒वस्य॑ सं॒सद्यनी॑के॒ यं मर्ता॑सः श्ये॒तं ज॑गृ॒भ्रे ।

नि यो गृभं॒ पौरु॑षेयीमु॒वोच॑ दु॒रोक॑म॒ग्निरा॒यवे॑ शुशोच ॥३

अ॒स्य । दे॒वस्य॑ । स॒म्ऽसदि॑ । अनी॑के । यम् । मर्ता॑सः । श्ये॒तम् । ज॒गृ॒भ्रे ।

नि । यः । गृभ॑म् । पौरु॑षेयीम् । उ॒वोच॑ । दुः॒ऽओक॑म् । अ॒ग्निः । आ॒यवे॑ । शु॒शो॒च॒ ॥३

अस्य । देवस्य । सम्ऽसदि । अनीके । यम् । मर्तासः । श्येतम् । जगृभ्रे ।

नि । यः । गृभम् । पौरुषेयीम् । उवोच । दुःऽओकम् । अग्निः । आयवे । शुशोच ॥३

“अस्य “देवस्य अग्नेः “अनीके मुख्ये “संसदि स्थाने “श्येतं श्वेतं शुभ्रं “यम् अग्निं “मर्तासः मनुष्याः “जगृभ्रे परिगृह्णन्ति । “यः च अग्निः पौरुषेयीं पुरुषैः क्रियमाणां “गृभं गृभीतं “नि “उवोच ॥ अत्र वचिः सेवार्थे वर्तते । निषेवत इत्यर्थः । सः “अग्निः “आयवे मनुष्यार्थम् । द्रुह्यवः आयवः' इति मनुष्यनामसु पाठात् । दुरोकं सपत्नैर्दुःसेवं यथा भवति तथा “शुशोच दीप्यते ॥

अ॒यं क॒विरक॑विषु॒ प्रचे॑ता॒ मर्ते॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि ।

स मा नो॒ अत्र॑ जुहुरः सहस्वः॒ सदा॒ त्वे सु॒मन॑सः स्याम ॥४

अ॒यम् । क॒विः । अक॑विषु । प्रऽचे॑ताः । मर्ते॑षु । अ॒ग्निः । अ॒मृतः॑ । नि । धा॒यि॒ ।

सः । मा । नः॒ । अत्र॑ । जु॒हु॒रः॒ । स॒ह॒स्वः॒ । सदा॑ । त्वे इति॑ । सु॒ऽमन॑सः । स्या॒म॒ ॥४

अयम् । कविः । अकविषु । प्रऽचेताः । मर्तेषु । अग्निः । अमृतः । नि । धायि ।

सः । मा । नः । अत्र । जुहुरः । सहस्वः । सदा । त्वे इति । सुऽमनसः । स्याम ॥४

७.३३.६

आशीस्तु वात आ वातु दण्डेति परिदेवना । प्रश्नश्च प्रतिवाक्यं च पृच्छामि त्वेत्यृचौ पृथक् ।।बृहद्देवता १.५० ।।

# ऋग्वेदः सूक्तं ७.३४


ऋग्वेदः - मण्डल ७

← सूक्तं ७.३३ | सूक्तं ७.३४ | सूक्तं ७.३५ →

मैत्रावरुणिर्वसिष्ठः।


दे. विश्वे देवाः, १६ अहिः, १७ अहिर्बुध्न्यः। द्विपदा विराट्, २२-२५ त्रिष्टुप्, ।

---

प्र शुक्रैतु देवी मनीषा अस्मत्सुतष्टो रथो न वाजी ॥१॥

विदुः पृथिव्या दिवो जनित्रं शृण्वन्त्यापो अध क्षरन्तीः ॥२॥

आपश्चिदस्मै पिन्वन्त पृथ्वीर्वृत्रेषु शूरा मंसन्त उग्राः ॥३॥

आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥४॥

अभि प्र स्थाताहेव यज्ञं यातेव पत्मन्त्मना हिनोत ॥५॥

त्मना समत्सु हिनोत यज्ञं दधात केतुं जनाय वीरम् ॥६॥

उदस्य शुष्माद्भानुर्नार्त बिभर्ति भारं पृथिवी न भूम ॥७॥

ह्वयामि देवाँ अयातुरग्ने साधन्नृतेन धियं दधामि ॥८॥

अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ॥९॥

आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥१०॥

राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥११॥

अविष्टो अस्मान्विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥१२॥

व्येतु दिद्युद्द्विषामशेवा युयोत विष्वग्रपस्तनूनाम् ॥१३॥

अवीन्नो अग्निर्हव्यान्नमोभिः प्रेष्ठो अस्मा अधायि स्तोमः ॥१४॥

सजूर्देवेभिरपां नपातं सखायं कृध्वं शिवो नो अस्तु ॥१५॥

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजस्सु षीदन् ॥१६॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥१७॥

उत न एषु नृषु श्रवो धुः प्र राये यन्तु शर्धन्तो अर्यः ॥१८॥

तपन्ति शत्रुं स्वर्ण भूमा महासेनासो अमेभिरेषाम् ॥१९॥

आ यन्नः पत्नीर्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥२०॥

प्रति न स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिर्वसूयुः ॥२१॥

ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु ।

वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः ॥२२॥

तन्नो रायः पर्वतास्तन्न आपस्तद्रातिषाच ओषधीरुत द्यौः ।

वनस्पतिभिः पृथिवी सजोषा उभे रोदसी परि पासतो नः ॥२३॥

अनु तदुर्वी रोदसी जिहातामनु द्युक्षो वरुण इन्द्रसखा ।

अनु विश्वे मरुतो ये सहासो रायः स्याम धरुणं धियध्यै ॥२४॥

तन्न इन्द्रो वरुणो मित्रो अग्निराप ओषधीर्वनिनो जुषन्त ।

शर्मन्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥२५॥

**सायणभाष्यम्**

तृतीयेऽनुवाके द्वाविंशतिसूक्तानि । तत्र 'प्र शुक्रा' इति पञ्चविंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका - प्र शुक्रा पञ्चाधिका वैश्वदेवं हाद्या एकविंशतिद्विपदा अब्जामहेरर्धर्च उत्तरोऽहिर्बुध्न्याय ' इति । वसिष्ठ ऋषिः । आद्या एकविंशतिर्द्विपदा विंशत्यक्षरा विराजो द्वाविंशायाश्चतस्रस्त्रिष्टुभः । विश्वे देवा देवता । व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम् । सूत्रितं च - प्र शुक्रैत्विति वैश्वदेवम् ' (आश्व. श्रौ. ८.८) इति । षोडशिनि 'आ धूर्ष्वस्मा इति द्विपदा ' (आश्व. श्रौ. ६. २) इति । महाव्रतेऽप्येषा द्विपदा। तथैव पञ्चमारण्यके सूत्रितं - आ धूर्ष्वस्मा इत्येका सूददोहाः' (ऐ. आ. ५. २. २) इति ॥

प्र शु॒क्रैतु॑ दे॒वी म॑नी॒षा अ॒स्मत्सुत॑ष्टो॒ रथो॒ न वा॒जी ॥१

प्र । शु॒क्रा । ए॒तु॒ । दे॒वी । म॒नी॒षा । अ॒स्मत् । सु॒ऽत॑ष्टः । रथः॑ । न । वा॒जी ॥१

प्र । शुक्रा । एतु । देवी । मनीषा । अस्मत् । सुऽतष्टः । रथः । न । वाजी ॥१

"शुक्रा दीप्ता "देवी सर्वेषां कामानां प्रदात्री "मनीषा स्तुतिः "अस्मत् अस्मत्तः अस्मिन् सूक्ते स्तोष्यमाणान् देवान् "वाजी वेगवान् "सुतष्टः सुसंस्कृतः "रथो "न रथ इव "प्र "एतु प्रगच्छतु ॥

वि॒दुः पृ॑थि॒व्या दि॒वो ज॒नित्रं॑ शृ॒ण्वंत्यापो॒ अध॒ क्षरं॑तीः ॥२

वि॒दुः । पृ॒थि॒व्याः । दि॒वः । ज॒नित्र॑म् । शृ॒ण्वन्ति॑ । आपः॑ । अध॑ । क्षर॑न्तीः ॥२

विदुः । पृथिव्याः । दिवः । जनित्रम् । शृण्वन्ति । आपः । अध । क्षरन्तीः ॥२

अस्यामृच्यापः स्तूयन्ते । "क्षरन्तीः क्षरन्त्यः "आपः "दिवः "पृथिव्याः च । उभयोरपि लोकयोरित्यर्थः । "जनित्रम् उत्पत्तिं "विदुः जानन्ति। "अध अपि च "शृण्वन्ति स्तोत्राणीति शेषः ॥

आप॑श्चिदस्मै॒ पिन्वं॑त पृ॒थ्वीर्वृ॒त्रेषु॒ शूरा॒ मंसं॑त उ॒ग्राः ॥३

आपः॑ । चि॒त् । अ॒स्मै॒ । पिन्वं॑न्त । पृ॒थ्वीः । वृ॒त्रेषु॑ । शूराः॑ । मंस॑न्ते । उ॒ग्राः ॥३

आपः । चित् । अस्मै । पिन्वन्त । पृथ्वीः । वृत्रेषु । शूराः । मंसन्ते । उग्राः ॥३

इन्द्रोऽस्मिन् द्वृचे स्तूयते । "पृथ्वीः पृथ्व्यः प्रथमानाः "आपश्चित् आपोऽपि "अस्मै इन्द्राय "पिन्वन्त प्यायन्ते । "वृत्रेषु उपद्रवेषु सत्सु "उग्राः उद्गूर्णास्तेजस्विनो बा "शूराः योद्धारोऽपि "मंसन्ते इममेवेन्द्रं स्तुवन्ति ॥

आ धू॒र्ष्व॑स्मै॒ दधा॒ताश्वा॒निंद्रो॒ न व॒ज्री हिर॑ण्यबाहुः ॥४

आ । धूः॒ऽसु । अ॒स्मै॒ । दधा॑त । अश्वा॑न् । इन्द्रः॑ । न । व॒ज्री । हिर॑ण्यऽबाहुः ॥४

आ । धूःऽसु । अस्मै । दधात । अश्वान् । इन्द्रः । न । वज्री । हिरण्यऽबाहुः ॥४

"अस्मै । षष्ठ्यर्थे चतुर्थी । अस्येन्द्रस्यागमनाय "अश्वान् "धूर्षु रथस्य "आ "दधात। "इन्द्रो "न । नेति चार्थे। इन्द्रः "वज्री वज्रवान् "हिरण्यबाहुः हिरण्यहस्तश्च भवति ॥ षोडशिनि शस्यमानत्वादस्या ऐन्द्रत्वं गम्यते । 'आ धूर्ष्वस्मै ' इत्यत्र 'अस्मै ' इत्यस्य पदस्यानुदात्तत्वं पूर्वस्यामिन्द्रस्य प्रकृतत्वात् । अत एव पूर्वाप्यैन्द्रीति विज्ञायते । पूर्वस्यामप्यृचि 'अस्मै ' इत्यत्रानुदात्तत्वमल्पीयोऽर्थतरमनुदात्तमिति । तथा च यास्कः - ' अस्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम् ' (निरु. ४. २५) इति । अल्पीयस्त्वं चेदंशब्दप्रवृत्तिनिमित्तस्य संनिधानस्य दूरस्थत्वेनेत्यवगन्तव्यम् ॥

अ॒भि प्र स्था॒ताहे॑व य॒ज्ञं याते॑व॒ पत्म॒न्त्मना॑ हिनोत ॥५

अ॒भि । प्र । स्था॒त॒ । अह॑ऽइव । य॒ज्ञम् । याता॑ऽइव । पत्म॑न् । त्मना॑ । हि॒नो॒त॒ ॥५

अभि । प्र । स्थात । अहऽइव । यज्ञम् । याताऽइव । पत्मन् । त्मना । हिनोत ॥५

यज्ञस्तुतिरियम् । हे जनाः “यज्ञम् “अभि “प्र “स्थात अभिक्रमत । “अहेव इति पूरणौ । अपि च "पत्मन् पत्मनि यज्ञमार्गे “त्मना स्वयमेव “यातेव गन्तेव “हिनोत गच्छत । ' हि गतौ' इति धातुः ॥

त्मना॑ स॒मत्सु॑ हि॒नोत॑ य॒ज्ञं दधा॑त के॒तुं जना॑य वी॒रं ॥६

त्मना॑ । स॒मत्ऽसु॑ । हि॒नोत॑ । य॒ज्ञम् । दधा॑त । के॒तुम् । जना॑य । वी॒रम् ॥६

त्मना । समत्ऽसु । हिनोत । यज्ञम् । दधात । केतुम् । जनाय । वीरम् ॥६

उक्तस्यैव विवरणमत्र। हे मदीया जनाः “समस्सु संग्रामेषु “त्मना स्वयमेव “हिनोत गच्छत । अपि च “केतुं प्रज्ञापकं “वीरं पापानां वारयितारम् । नाशकमित्यर्थः । “यज्ञं “जनाय लोकाय । तद्रक्षार्थमित्यर्थः । “दधात विधत्त ॥

उद॑स्य॒ शुष्मा॑द्भा॒नुर्नार्त॒ बिभ॑र्ति भा॒रं पृ॑थि॒वी न भूम॑ ॥७

उत् । अ॒स्य॒ । शुष्मा॑त् । भा॒नुः । न । आ॒र्त॒ । बिभ॑र्ति । भा॒रम् । पृ॒थि॒वी । न । भूम॑ ॥७

उत् । अस्य । शुष्मात् । भानुः । न । आर्त । बिभर्ति । भारम् । पृथिवी । न । भूम ॥७

“अस्य यज्ञस्य “शुष्मात् बलात् "भानुः सूर्यः "उत् "आर्त उद्गच्छति । "भूम भूतानि पृथिवीव “भारं लोकस्यायं यज्ञो “बिभर्ति च ॥

ह्वया॑मि दे॒वाँ अया॑तुरग्ने॒ साध॑न्नृ॒तेन॒ धियं॑ दधामि ॥८

ह्वया॑मि । दे॒वान् । अया॑तुः । अ॒ग्ने॒ । साध॑न् । ऋ॒तेन॑ । धिय॑म् । द॒धा॒मि॒ ॥८

ह्वयामि । देवान् । अयातुः । अग्ने । साधन् । ऋतेन । धियम् । दधामि ॥८

अस्मिंस्तृचे देवाः स्तूयन्ते । हे “अग्ने “अयातुः अहिंसादिनियमयुक्तेन “ऋतेन यज्ञेन “साधन् कामान् साधयन् “देवान् ह्वयामि । अपि च “धियं देवानां परिचरणात्मकं कर्म “दधामि । करोमीत्यर्थः ॥

अ॒भि वो॑ दे॒वीं धियं॑ दधिध्व॒ं प्र वो॑ देव॒त्रा वाचं॑ कृणुध्वं ॥९

अ॒भि । व॒: । दे॒वीम् । धियं॑म् । द॒धि॒ध्व॒म् । प्र । व॒: । दे॒व॒ऽत्रा । वाचं॑म् । कृ॒णु॒ध्व॒म् ॥९

अभि । वः । देवीम् । धियम् । दधिध्वम् । प्र । वः । देवऽत्रा । वाचम् । कृणुध्वम् ॥९

हे जनाः “वः यूयम् “अभि देवानुद्दिश्य “देवीं दीप्तां “धियं कर्म “दधिध्वं विधत्त । अपि च “वः यूयं “देवत्रा देवेषु “वाचं स्तुतिरूपां “प्र “कृणुध्वं प्रकर्षेण कुरुध्वम् ॥

आ चं॑ष्ट आसा॒ं पाथो॑ न॒दीना॒ं वरु॑ण उ॒ग्रः स॒हस्र॑चक्षाः ॥१०

आ । च॒ष्टे॒ । आ॒सा॒म् । पाथः॑ । न॒दीना॑म् । वरु॑णः । उ॒ग्रः । स॒हस्र॑ऽचक्षाः ॥१०

आ । चष्टे । आसाम् । पाथः । नदीनाम् । वरुणः । उग्रः । सहस्रऽचक्षाः ॥१०

"सहस्रचक्षाः बहुचक्षुः “वरुणः "आसां “नदीनां "पाथः जलम् “आ चष्टे अभिपश्यति । कीदृशो वरुणः । "उग्रः उद्गूर्ण ओजस्वी वा ॥ ॥ २५ ॥

राजा॑ रा॒ष्ट्राना॒ं पेशो॑ न॒दीना॒मनु॑त्तमस्मै क्ष॒त्रं वि॒श्वायु॑ ॥११

राजा॑ । रा॒ष्ट्राना॑म् । पेशः॑ । न॒दीना॑म् । अनु॑त्तम् । अ॒स्मै॒ । क्ष॒त्रम् । वि॒श्वऽआ॑यु ॥११

राजा । राष्ट्रानाम् । पेशः । नदीनाम् । अनुत्तम् । अस्मै । क्षत्रम् । विश्वऽआयु ॥११

"राष्ट्रानां राष्ट्राणाम् ॥ णत्वाभावश्छान्दसः ॥ ईश्वराणामपि वरुणः "राजा ईश्वरः भवति । “नदीनां “पेशः रूपं रूपकृदपि भवतीत्यर्थः। “अस्मै । षष्ठ्यर्थे चतुर्थी। अस्य वरुणस्य “क्षत्रं बलम् “अनुत्तम् अन्यैरबाधितं "विश्वायु सर्वतो गन्तृ भवतीति ॥

अवि॑ष्टो अ॒स्मान्विश्वा॑सु वि॒क्ष्वद्युं॑ कृणोत॒ शंसं॑ निनि॒त्सोः ॥१२

अवि॑ष्टो॒ इति॑ । अ॒स्मान् । विश्वा॑सु । वि॒क्षु । अद्यु॑म् । कृ॒णो॒त॒ । शंस॑म् । नि॒नि॒त्सोः ॥१२

अविष्टो इति । अस्मान् । विश्वासु । विक्षु । अद्युम् । कृणोत । शंसम् । निनित्सोः ॥१२

अयं द्वृचो दैवः । हे देवाः “अस्मान् “विश्वासु सर्वासु “विक्षु प्रजासु । अविष्ट उ इति समुदितम् “अविष्टो इति । अविष्ट रक्षत। “शंसं निनित्सोः निन्दितुमिच्छतः शत्रोः "अद्युम् अदीप्तिं “कृणोत कुरुत च ॥

व्ये॑तु दि॒द्युद्द्वि॒षामशे॑वा यु॒योत॒ विष्व॒ग्रप॑स्त॒नूनां॑ ॥१३

वि । ए॒तु॒ । दि॒द्युत् । द्वि॒षाम् । अशे॑वा । यु॒योत॑ । विष्व॑क् । रपः॑ । त॒नूना॑म् ॥१३

वि । एतु । दिद्युत् । द्विषाम् । अशेवा । युयोत । विष्वक् । रपः । तनूनाम् ॥१३

"द्विषां शत्रूणां "दिद्युत् आयुधम् “अशेवा असुखकरी “विष्वक् सर्वतः “व्येतु अपगच्छतु । “तनूनाम् अङ्गानां “रपः पापं देवाः "युयोत अस्मत्तः पृथक्कुरुत ॥

अवी॑न्नो अ॒ग्निर्ह॒व्यान्नमो॑भिः॒ प्रेष्ठो॑ अस्मा अधायि॒ स्तोमः॑ ॥१४

अवी॑त् । नः॒ । अ॒ग्निः । ह॒व्य॒ऽअत् । नमः॑ऽभिः । प्रेष्ठः॑ । अ॒स्मै॒ । अ॒धा॒यि॒ । स्तोमः॑ ॥१४

अवीत् । नः । अग्निः । हव्यऽअत् । नमःऽभिः । प्रेष्ठः । अस्मै । अधायि । स्तोमः ॥१४

“हव्यात् हव्यानामत्ता "अग्निः “नमोभिः अस्मदीयैर्नमस्कारैः "प्रेष्ठः प्रियतमः सन् “नः अस्मान् “अवीत् रक्षतु । “अस्मै अग्नये स्तोत्रम् “अधायि अस्माभिर्व्यधायि ॥

स॒जूर्दे॒वेभि॑र॒पां नपा॑तं॒ सखा॑यं कृध्वं शि॒वो नो॑ अस्तु ॥१५

स॒ऽजूः । दे॒वेभिः॑ । अ॒पाम् । नपा॑तम् । सखा॑यम् । कृ॒ध्व॒म् । शि॒वः । नः॒ । अ॒स्तु॒ ॥१५

सऽजूः । देवेभिः । अपाम् । नपातम् । सखायम् । कृध्वम् । शिवः । नः । अस्तु ॥१५

हे स्तोतारः “अपाम् उदकानां “नपातं पुत्रमग्निम्। ‘सूनुः नपात्' इत्यपत्यनामसु पाठात् । “देवेभिः देवैः “सजूः सह "सखायं मित्रं स्तुतिभिः “कृध्वं कुरुध्वम् । स चापां नपात् “नः अस्मभ्यं “शिवः सुखकरः “अस्तु भवतु ।।

अ॒ब्जामु॒क्थैरहिं॑ गृणीषे बु॒ध्ने न॒दीनां॒ रजः॑स्सु॒ षीद॑न् ॥१६

अ॒प्ऽजाम् । उ॒क्थैः । अहि॑म् । गृ॒णी॒षे॒ । बु॒ध्ने । न॒दीना॑म् । रजः॑ऽसु । सीद॑न् ॥१६

अप्ऽजाम् । उक्थैः । अहिम् । गृणीषे । बुध्ने । नदीनाम् । रजःऽसु । सीदन् ॥१६

“अहिं मेघानामाहन्तारं "नदीनाम् उदकानां "बुध्ने स्थाने। बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति व्युत्पत्तेः । तस्मिन् “रजःसु उदकेषु “सीदन् सीदन्तम् “अब्जाम् अप्सु जातमिममग्निम् “उक्थैः स्तोत्रैः “गृणीषे। ‘बुध्ने नदीनां रजःसूदकेषु सीदन् बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति ' (निरु. १०. ४४ ) इति ॥

मा नोऽहि॑र्बु॒ध्न्यो॑ रि॒षे धा॒न्मा य॒ज्ञो अ॑स्य स्रिधदृता॒योः ॥१७

मा । नः॒ । अहिः॑ । बु॒ध्न्यः॑ । रि॒षे । धा॒त् । मा । य॒ज्ञः । अ॒स्य॒ । स्रि॒ध॒त् । ऋ॒त॒ऽयोः ॥१७

मा । नः । अहिः । बुध्न्यः । रिषे । धात् । मा । यज्ञः । अस्य । स्रिधत् । ऋतऽयोः ॥१७

“अहिर्बुध्न्यः । बुध्नेऽन्तरिक्षे भवो बुध्न्यः। अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्योऽग्निः “नः अस्मान् “रिषे हिंसकाय “मा “धात् मा ददातु । “अस्य “ऋतायोः यज्ञकामस्य यजमानस्य “यज्ञः “मा च “स्रिधत् न क्षीयेत । यद्वा । अस्याहिर्बुध्न्यस्य इममहिर्बुध्न्यमुद्दिश्य ऋतायोः यज्ञकामस्य यो यज्ञः स न क्षीयेतेत्यर्थः ।।

उ॒त नं॑ ए॒षु नृषु॒ श्रवों॑ धुः॒ प्र रा॒ये यं॑तु॒ शर्ध॑तो अ॒र्यः ॥१८

उ॒त । नः॒ । ए॒षु । नृषु॑ । श्रवः॑ । धुः॒ । प्र । रा॒ये । य॒न्तु॒ । शर्ध॑न्तः । अ॒र्यः ॥१८

उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यन्तु । शर्धन्तः । अर्यः ॥१८

अयं द्वृचो दैवो मारुतो वा । "उत अपि च “नः अस्मदीयेषु “एषु “नृषु पुरुषेषु “श्रवः अन्नं “धुः देवा मरुतो वा धारयन्तु । “राये धनार्थं "शर्धन्तः उत्सहमानाः प्रीयमाणा वा “अर्यः अरयः “प्र “यन्तु प्रगच्छन्तु । म्रियन्तामित्यर्थः ।।

तप॑न्ति॒ शत्रुं॒ स्व१॒॑र्ण भूमा॑ म॒हासे॑नासो॒ अमे॑भिरेषां ॥१९

तप॑न्ति । शत्रुं॑म् । स्वः॑ । न । भूम॑ । म॒हाऽसे॑नासः । अमे॑भिः । ए॒षा॒म् ॥१९

तपन्ति । शत्रुम् । स्वः । न । भूम । महाऽसेनासः । अमेभिः । एषाम् ॥१९

"महासेनासः महासेना राजानः “एषां मरुतां देवानां वा “अमेभिः बलैः “भूमा भुवनानि “स्वर्ण आदित्य इव "शत्रुं स्वकीयं “तपन्ति बाधन्ते । महान्तोऽपि राजानः अमैः बलैः शत्रून् बाधन्ते । तानि बलानि देवानामेवेत्यर्थः ॥

आ यन्नः॒ पत्नी॒र्गम॒न्त्यच्छा॒ त्वष्टा॑ सुपा॒णिर्दधा॑तु वी॒रान् ॥२०

आ । यत् । नः॒ । पत्नीः॑ । गम॑न्ति । अच्छ॑ । त्वष्टा॑ । सु॒ऽपा॒णिः । दधा॑तु । वी॒रान् ॥२०

आ । यत् । नः । पत्नीः । गमन्ति । अच्छ । त्वष्टा । सुऽपाणिः । दधातु । वीरान् ॥२०

अस्यां देवपत्न्यस्त्वष्टा च देवता । “यत् यदा “पत्नीः देवानां पत्न्यः “नः अस्मान् “अच्छ अभि “आ “गमन्ति आगच्छन्ति तदा “सुपाणिः शोभनहस्तः “त्वष्टा देवः “वीरान पुत्रान् “दधातु अस्मभ्यं ददातु ॥ ॥ २६ ॥

प्रति॑ नः॒ स्तोम॒ं त्वष्टा॑ जुषेत॒ स्याद॒स्मे अ॒रम॑तिर्वसू॒युः ॥२१

प्रति॑ । नः॒ । स्तोम॑म् । त्वष्टा॑ । जु॒षे॒त॒ । स्यात् । अ॒स्मे इति॑ । अ॒रम॑तिः । व॒सु॒ऽयुः ॥२१

प्रति । नः । स्तोमम् । त्वष्टा । जुषेत । स्यात् । अस्मे इति । अरमतिः । वसुऽयुः ॥२१

“नः अस्माकं “स्तोमं स्तोत्रं “त्वष्टा "प्रति “जुषेत प्रतिसेवेत । अपि च “अरमतिः पर्याप्तबुद्धिः सर्वविषयव्यापिबुद्धिर्वा त्वष्टा “अस्मे अस्मदर्थं “वसूयुः धनकामः “स्यात् भूयात् ॥

ता नों रासन्नाति॒षाचो॒ वसू॒न्या रोदं॑सी वरुणा॒नी शृं॑णोतु ।

वरू॑त्रीभिः सुशर॒णो नों अस्तु॒ त्वष्टा॑ सु॒दत्रो॒ वि दं॑धातु॒ रायः॑ ॥२२

ता । नः॒ । रा॒स॒न् । रा॒ति॒ऽसाचः॑ । वसू॑नि । आ । रोदं॑सी॒ इतिं । व॒रु॒णा॒नी । शृ॒णो॒तु॒ ।

वरू॑त्रीभिः । सु॒ऽश॒र॒णः । नः॒ । अ॒स्तु॒ । त्वष्टा॑ । सु॒ऽदत्रः॑ । वि । द॒धा॒तु॒ । रायः॑ ॥२२

ता । नः । रासन् । रातिऽसाचः । वसूनि । आ । रोदसी इति । वरुणानी । शृणोतु ।

वरूत्रीभिः । सुऽशरणः । नः । अस्तु । त्वष्टा । सुऽदत्रः । वि । दधातु । रायः ॥२२

“ता यानि अस्माकमभीष्टानि तानि “वसूनि धनानि “रातिषाचः दानसमवेताः देवपत्न्यः “नः अस्मभ्यं “रासन् प्रयच्छन्तु। अपि च “वरुणानी वरुणस्य पत्नी “आ “शृणोतु अस्मदीयं स्तोत्रम् अभिशृणोतु। “रोदसी द्यावापृथिव्यौ चाभिशृणुताम्। “सुदत्रः कल्याणदानः “त्वष्टा च “वरूत्रीभिः उपद्रवाणां वारयित्रीभिर्देवपत्नीभिः सह “नः अस्मभ्यं “सुशरणः सुशरणप्रदः “अस्तु । "रायः धनानि च “वि “दधातु ॥

तन्नो॒ रायः॒ पर्व॑ता॒स्तन्न॒ आप॒स्तद्रा॑ति॒षाच॒ ओष॑धीरु॒त द्यौः ।

वन॒स्पतिं॑भिः पृथि॒वी स॒जोषा॑ उ॒भे रोदं॑सी॒ परिं पासतो नः ॥२३

तत् । नः॒ । रायः॑ । पर्व॑ताः । तत् । नः॒ । आपः॑ । तत् । रा॒ति॒ऽसाचः॑ । ओष॑धीः । उ॒त । द्यौः ।

वन॒स्पतिं॑ऽभिः । पृ॒थि॒वी । स॒ऽजोषाः॑ । उ॒भे इतिं । रोदं॑सी॒ इतिं । परिं । पा॒स॒तः॒ । नः॒ ॥२३

तत् । नः । रायः । पर्वताः । तत् । नः । आपः । तत् । रातिऽसाचः । ओषधीः । उत । द्यौः ।

वनस्पतिऽभिः । पृथिवी । सऽजोषाः । उभे इति । रोदसी इति । परि । पासतः । नः ॥२३

“नः अस्माकम् । “तत् इत्यव्ययम् । ताः “रायः धनानि “पर्वताः परिपान्तु। “नः अस्माकं “तत् ताः रायः “आपः च परिपान्तु। “तद्रातिषाचः दानसहिता देवपत्न्यश्च परिपान्तु। “ओषधीः ओषधयश्च तत् परिपान्तु । "उत अपि च “द्यौः तत् परिपातु । “वनस्पतिभिः “सजोषाः सहिता “पृथिवी अन्तरिक्षं च तत् परिपातु ।'आपः पृथिवी ' इत्यन्तरिक्षनामसु पाठात् । “नः अस्माकं तत् "उभे “रोदसी द्यावापृथिव्यावपि “परि “पासतः परिरक्षताम् ॥

अनु॒ तदु॒र्वी रोदं॑सी जिहाता॒मनुं॑ द्यु॒क्षो वरुं॑ण॒ इंद्रं॑सखा ।

अनु॒ विश्वे॑ म॒रुतो॒ ये स॒हासो॑ रा॒यः स्या॑म ध॒रुणं॑ धि॒यध्यै॑ ॥२४

अनु॑ । तत् । उ॒र्वी इति॑ । रोद॑सी॒ इति॑ । जि॒हा॒ता॒म् । अनु॑ । द्यु॒क्षः । वरु॑णः । इन्द्र॑ऽसखा ।

अनु॑ । विश्वे॑ । म॒रुतः॑ । ये । स॒हासः॑ । रा॒यः । स्या॒म॒ । ध॒रुण॑म् । धि॒यध्यै॑ ॥२४

अनु । तत् । उर्वी इति । रोदसी इति । जिहाताम् । अनु । द्युक्षः । वरुणः । इन्द्रऽसखा ।

अनु । विश्वे । मरुतः । ये । सहासः । रायः । स्याम । धरुणम् । धियध्यै ॥२४

“तत् वक्ष्यमाणम् "उर्वी विस्तीर्णे “रोदसी द्यावापृथिव्यौ “अनु "जिहाताम् अनुगच्छताम्। अनुमन्येतामित्यर्थः। “द्युक्षः दीप्तेर्निवासभूतः “इन्द्रसखा इन्द्रसखः । इन्द्रः सखा यस्येति बहुव्रीहिः। “वरुणः च तत् “अनु जिहीताम् । द्विवचनान्तस्यैकवचनान्ततया विपरिणामः । “ये “सहासः शत्रूणामभिभवितारः ते “मरुतः अपि तत् “अनु जिहताम् । अत्र बहुवचनान्ततया विपरिणामः । यदनुमन्तव्यं तदाह । “धियध्यै भरणीयं धारयितुं “रायः धनस्य “धरुणं धाम स्थानं वयं “स्याम भवेमेति ।।

तन्न॒ इंद्रो॒ वरु॑णो मि॒त्रो अ॒ग्निराप॒ ओष॑धीर्व॒निनो॑ जुषंत ।

शर्म॑न्त्स्याम म॒रुता॑मु॒पस्थे॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥२५

तत् । नः॒ । इन्द्रः॑ । वरु॑णः । मि॒त्रः । अ॒ग्निः । आपः॑ । ओष॑धीः । व॒निनः॑ । जु॒ष॒न्त॒ ।

शर्म॑न् । स्या॒म॒ । म॒रुता॑म् । उ॒पऽस्थे॑ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥२५

तत् । नः । इन्द्रः । वरुणः । मित्रः । अग्निः । आपः । ओषधीः । वनिनः । जुषन्त ।

शर्मन् । स्याम । मरुताम् । उपऽस्थे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥२५

“नः अस्मदीयं “तत् इदं स्तोत्रम् “इन्द्रः “वरुणः च “मित्रः च “अग्निः च "आपः च “ओषधीः ओषधयश्च “वनिनः वृक्षाश्च “जुषन्त जुषन्तां सेवन्ताम् । वयं च "मरुतामुपस्थे उपस्थाने वर्तमानाः “शर्मन् शर्मणि सुखे गृहे वा “स्याम भवेम । सिद्धमन्यत् ॥ ॥ २७ ॥

# ऋग्वेदः सूक्तं ७.३५

ऋग्वेदः - मण्डल ७
← सूक्तं ७.३४ सूक्तं ७.३५ सूक्तं ७.३६ →
मैत्रावरुणिर्वसिष्ठः।

दे. विश्वे देवाः। त्रिष्टुप्‌।

---

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥१॥
शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥२॥
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥३॥
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥४॥
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥५॥
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥

शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।

शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः ॥७॥

शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।

शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥८॥

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।

शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥९॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।

शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥१०॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।

शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥११॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।

शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥१२॥

शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।

शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥१३॥

आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।

शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥१४॥

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।

ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥१५॥

**सायणभाष्यम्**

‘शं न इन्द्राग्नी' इति पञ्चदशर्चं द्वितीयं सूक्तम् । अत्रेयमनुक्रमणिका- शं नः पञ्चोना शान्तिः ' इति । वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः । वैश्वदेवं ह ' इत्युक्तत्वादिदमपि वैश्वदेवम् । महानाम्नीव्रत एतत् सूक्तं जप्यम् । तथा च सूत्रितं - भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः' (आश्व. श्रौ. ८. १४) इति । एव....सु ॥

शं नं इन्द्राग्नी भंवतामवोंभिः शं न इन्द्रावरुंणा रातहंव्या ।

शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥१

शम् । नः । इन्द्राग्नी इति । भवताम् । अवःऽभिः । शम् । नः । इन्द्रावरुणा । रातऽहव्या ।

शम् । इन्द्रासोमा । सुविताय । शम् । योः । शम् । नः । इन्द्रापूषणा । वाजऽसातौ ॥१

शम् । नः । इन्द्राग्नी इति । भवताम् । अवःऽभिः । शम् । नः । इन्द्रावरुणा । रातऽहव्या ।

शम् । इन्द्रासोमा । सुविताय । शम् । योः । शम् । नः । इन्द्रापूषणा । वाजऽसातौ ॥१

"नः अस्माकमस्मभ्यं वा "इन्द्राग्नी "अवोभिः रक्षणैः "शं शान्त्यै "भवताम्। "रातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ "इन्द्रावरुणा इन्द्रावरुणावपि "नः अस्मभ्यं "शं शान्त्यै भवताम् । "इन्द्रासोमा इन्द्रासोमावपि नः "शं शान्त्यै "सुविताय कल्याणाय च भवताम् । "शं शान्त्यै सुखाय च। पुनरुक्तिरादरार्था। अथवा शं शमनहेतुकं सुखं "योः विषययोगनिमित्तं सुखमित्यपुनरुक्तिः । इन्द्रापूषणा इन्द्रापूषणावपि "वाजसातौ युद्धे अन्नलाभे निमित्ते वा "नः "शं शान्त्यै भवतामित्यर्थः ॥

शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।

शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥२

शम् । नः । भगः । शम् । ऊं इति । नः । शंसः । अस्तु । शम् । नः । पुरम्ऽधिः । शम् । ऊं इति । सन्तु । रायः ।

शम् । नः । सत्यस्य । सुऽयमस्य । शंसः । शम् । नः । अर्यमा । पुरुऽजातः । अस्तु ॥२

शम् । नः । भगः । शम् । ऊं इति । नः । शंसः । अस्तु । शम् । नः । पुरम्ऽधिः । शम् । ऊं इति । सन्तु । रायः ।

शम् । नः । सत्यस्य । सुऽयमस्य । शंसः । शम् । नः । अर्यमा । पुरुऽजातः । अस्तु ॥२

"नः अस्माकं "शं शान्त्यै "भगः देवः "अस्तु भवतु । "नः अस्माकं "शमु शान्त्या एव "शंसः नराशंसोऽस्तु भवतु । "नः अस्माकं "शं शान्त्यै "पुरंधिः बहुधीरप्यस्तु । "रायः धनान्यपि "शमु शान्त्या एव "सन्तु। "नः अस्माकं "सुयमस्य शोभनयमयुक्तस्य "सत्यस्य "शंसः वचनमपि "शम् अस्तु । "नः अस्माकं "शं शान्त्यै "पुरुजातः बहुप्रादुर्भावः "अर्यमा देवोऽपि "अस्तु ॥

शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।

शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥३

शम् । नः । धाता । शम् । ऊं इति । धर्ता । नः । अस्तु । शम् । नः । उरूची । भवतु । स्वधाभिः ।

शम् । रोदसी इति । बृहती इति । शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥३

शम् । नः । धाता । शम् । ऊं इति । धर्ता । नः । अस्तु । शम् । नः । उरूची । भवतु । स्वधाभिः ।

शम् । रोदसी इति । बृहती इति । शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥३

“नः अस्माकं “शं शान्त्यै “धाता देवः “अस्तु । "नः अस्माकं “शमु शान्त्या एव “धर्ता पुण्यपापानां विधारयिता वरुणो देवोऽप्यस्तु । “नः अस्माकं “शं शान्त्यै “उरूची विवर्तगमना पृथिव्यपि “स्वधाभिः अन्नैः सहास्तु । “बृहती महत्यौ “रोदसी द्यावापृथिव्यावपि “शं भवताम् । “अद्रिः पर्वतोऽपि “नः अस्माकं “शं शान्त्यै भवतु । शं शान्त्यै “नः अस्माकं “देवानां "सुहवानि सुष्टुतयः “सन्तु भवन्तु ॥

शं नो॑ अ॒ग्निर्ज्योति॑रनीको अस्तु॒ शं नो॑ मि॒त्रावरु॑णाव॒श्विना॒ शम् ।

शं न॑ः सु॒कृतां॑ सुकृ॒तानि॑ सन्तु॒ शं न॑ इषि॒रो अ॒भि वा॑तु॒ वात॑ः ॥४

शम् । न॒ः । अ॒ग्निः । ज्योति॑ःऽअनीकः । अ॒स्तु॒ । शम् । न॒ः । मि॒त्रावरु॑णौ । अ॒श्विना॑ । शम् ।

शम् । न॒ः । सु॒ऽकृता॑म् । सु॒ऽकृ॒तानि॑ । स॒न्तु॒ । शम् । न॒ः । इ॒षि॒रः । अ॒भि । वा॒तु॒ । वात॑ः ॥४

शम् । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शम् । नः । मित्रावरुणौ । अश्विना । शम् ।

शम् । नः । सुऽकृताम् । सुऽकृतानि । सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥४

"ज्योतिरनीकः ज्योतिर्मुखः “अग्निः “नः अस्माकं “शं शान्त्यै अस्तु भवतु । मित्रावरुणा मित्रावरुणावपि “नः अस्माकं “शं शान्त्यै भवताम् । “अश्विना अश्विनावपि “शं भवताम् । “सुकृतां पुण्यकर्मणां पुरुषाणां “सुकृतानि पुण्यकर्माण्यपि “नः अस्माकं “शं शान्त्यै “सन्तु भवन्तु । “इषिरः गमनशीलोऽपि “वातः वायुरपि “नः अस्माकं “शं शान्त्यै "अभि “वातु ॥

शं नो॒ द्यावा॑पृथि॒वी पू॒र्वहू॑तौ॒ शम॒न्तरि॑क्षं दृ॒शये॑ नो अस्तु ।

शं न॒ ओष॑धीर्व॒निनो॑ भवन्तु॒ शं नो॒ रज॑स॒स्पति॑रस्तु जि॒ष्णुः ॥५

शम् । न॒ः । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽहू॑तौ । शम् । अ॒न्तरि॑क्षम् । दृ॒शये॑ । न॒ः । अ॒स्तु॒ ।

शम् । न॒ः । ओष॑धीः । व॒निन॑ः । भ॒व॒न्तु॒ । शम् । न॒ः । रज॑सः । पति॑ः । अ॒स्तु॒ । जि॒ष्णुः ॥५

शम् । नः । द्यावापृथिवी इति । पूर्वऽहूतौ । शम् । अन्तरिक्षम् । दृशये । नः । अस्तु ।

शम् । नः । ओषधीः । वनिनः । भवन्तु । शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥५

“नः अस्माकं “शं शान्त्यै “द्यावापृथिवी द्यावापृथिव्यौ “पूर्वहूतौ प्रथमाह्वाने भवताम् । “अन्तरिक्षम् अपि “नः अस्माकं “दृशये दर्शनाय “शम् “अस्तु । "नः अस्माकं “शं शान्त्यै “ओषधीः ओषधयोऽपि “भवन्तु। “वनिनः वृक्षाश्च शं भवन्तु । “जिष्णुः जयशीलः "रजसः लोकस्य "पतिः इन्द्रोऽपि “नः अस्माकं “शं शान्त्यै “अस्तु ॥ ॥ २८ ॥

शं न॒ इन्द्रो॒ वसु॑भिर्दे॒वो अ॑स्तु॒ शमा॑दि॒त्येभि॒र्वरु॑णः सु॒शंस॑ः ।

शं नों रु॒द्रो रु॒द्रेभि॒र्जला॑षः॒ शं न॒स्त्वष्टा॒ ग्नाभिं॑रि॒ह शृं॑णोतु ॥६

शम् । न॒ः । इन्द्र॑ः । वसुं॑ऽभिः । दे॒वः । अ॒स्तु॒ । शम् । आ॒दि॒त्येभि॑ः । वरुं॑णः । सु॒ऽशंस॑ः ।

शम् । न॒ः । रु॒द्रः । रु॒द्रेभि॑ः । जला॑षः । शम् । न॒ः । त्वष्टा॑ । ग्नाभि॑ः । इ॒ह । शृ॒णो॒तु॒ ॥६

शम् । नः । इन्द्रः । वसुऽभिः । देवः । अस्तु । शम् । आदित्येभिः । वरुणः । सुऽशंसः ।

शम् । नः । रुद्रः । रुद्रेभिः । जलाषः । शम् । नः । त्वष्टा । ग्नाभिः । इह । शृणोतु ॥६

“देवः द्योतनादिगुणयुक्तः “इन्द्रः "वसुभिः देवैः सार्धं “नः अस्माकं “शं शान्त्यै भवतु । "सुशंसः शोभनस्तुतिः “वरुणः देवः “आदित्येभिः आदित्यैर्देवैः सार्धं “शं शान्त्यै “अस्तु भवतु । “जलाषः “रुद्रः दुःखद्रावको देवः “रुद्रेभिः रुद्रैः सार्धं “शं शान्त्यै “नः अस्माकं भवतु । “इह यज्ञे “त्वष्टा देवः "ग्नाभिः देवपत्नीभिः सार्धं “नः “शं शान्त्यै भवतु । इह यज्ञे नः स्तोत्रं “शृणोतु च ॥

शं न॒ः सोमों भवतु॒ ब्रह्म॒ शं न॒ः शं नो॒ ग्रावा॑ण॒ः शमुं सन्तु य॒ज्ञाः ।

शं न॒ः स्वरू॑णां मि॒तयों भवन्तु॒ शं न॑ः प्र॒स्व१॒ः शम्वं॑स्तु वेदिं॑ः ॥७

शम् । न॒ः । सोम॑ः । भ॒व॒तु॒ । ब्रह्म॑ । शम् । न॒ः । शम् । न॒ः । ग्रावा॑णः । शम् । ऊं॒ इतिं॑ । स॒न्तु॒ । य॒ज्ञाः ।

शम् । न॒ः । स्वरू॑णाम् । मि॒तय॑ः । भ॒व॒न्तु॒ । शम् । न॒ः । प्र॒ऽस्व॑ः । शम् । ऊं॒ इतिं॑ । अ॒स्तु॒ । वेदि॑ः ॥७

शम् । नः । सोमः । भवतु । ब्रह्म । शम् । नः । शम् । नः । ग्रावाणः । शम् । ऊं इति । सन्तु । यज्ञाः ।

शम् । नः । स्वरूणाम् । मितयः । भवन्तु । शम् । नः । प्रऽस्वः । शम् । ऊं इति । अस्तु । वेदिः ॥७

“नः अस्माकं “शं शान्त्यै “सोमः “भवतु । “ब्रह्म स्तोत्रमपि “नः अस्माकं “शं शान्त्यै भवतु । “ग्रावाणः अभिषवसाधनभूताः पाषाणा अपि “नः अस्माकं “शं शान्त्यै भवन्तु । “यज्ञाः च नः “शमु शान्त्या एव “सन्तु। "स्वरूणां यूपानां “मितयः उन्मानान्यपि “नः अस्माकं “शं शान्त्यै “भवन्तु । "प्रस्वः ओषधयोऽपि “नः अस्माकं “शं शान्त्यै भवन्तु । "वेदिः अपि नः “शमु शान्त्या एव "अस्तु ।

शं न॒ः सूर्यं उरु॒चक्षा॒ उदें॑तु॒ शं न॒श्चत॑स्रः प्र॒दिशों भवन्तु ।

शं न॒ः पर्वं॑ता ध्रु॒वयों भवन्तु॒ शं न॒ः सिन्धं॑व॒ः शमुं स॒न्त्वाप॑ः ॥८

शम् । न॒ः । सूर्य॑ः । उ॒रु॒ऽचक्षा॑ः । उत् । ए॒तु॒ । शम् । न॒ः । चत॑स्रः । प्र॒ऽदिश॑ः । भ॒व॒न्तु॒ ।

शम् । न॒ः । पर्वं॑ताः । ध्रु॒वय॑ः । भ॒व॒न्तु॒ । शम् । न॒ः । सिन्धं॑वः । शम् । ऊं॒ इतिं॑ । स॒न्तु॒ । आप॑ः ॥८

शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । नः । चतस्रः । प्रऽदिशः । भवन्तु ।

शम् । नः । पर्वताः । ध्रुवयः । भवन्तु । शम् । नः । सिन्धवः । शम् । ऊं इति । सन्तु । आपः ॥८

“नः अस्माकं “शं शान्त्यै “सूर्यः “उरुचक्षाः विस्तीर्णतेजाः सन् “उदेतु उदयं प्राप्नोतु । “चतस्रः “प्रदिशः महादिशोऽपि “नः अस्माकं “शं शान्त्यै “भवन्तु । “नः अस्माकं “शं शान्त्यै “पर्वताः “ध्रुवयः ध्रुवाः “भवन्तु। “नः अस्माकं “शं शान्त्यै “सिन्धवः नद्योऽपि भवन्तु । “आपः च नः “शमु शान्त्या एव “सन्तु ॥

शं नो॒ अदि॑तिर्भवतु व्र॒तेभि॒ः शं नो॑ भवन्तु म॒रुत॑ः स्व॒र्काः ।

शं नो॒ विष्णु॒ः शमु॑ पू॒षा नो॑ अस्तु॒ शं नो॑ भ॒वित्रं॒ शम्व॑स्तु वा॒युः ॥९

शम् । न॒ः । अदि॑तिः । भ॒व॒तु॒ । व्र॒तेभिः॑ । शम् । न॒ः । भ॒व॒न्तु॒ । म॒रुतः॑ । सु॒ऽअ॒र्काः ।

शम् । न॒ः । विष्णुः॑ । शम् । ऊँ॒ इति॑ । पू॒षा । न॒ः । अ॒स्तु॒ । शम् । न॒ः । भ॒वित्र॑म् । शम् । ऊँ॒ इति॑ । अ॒स्तु॒ । वा॒युः ॥९

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः ।

शम् । नः । विष्णुः । शम् । ऊं इति । पूषा । नः । अस्तु । शम् । नः । भवित्रम् । शम् । ऊं इति । अस्तु । वायुः ॥९

“अदितिः देवी “व्रतेभिः व्रतैः कर्मभिः सार्धं “नः अस्माकं “शं शान्त्यै “भवतु । “स्वर्काः शोभनस्तुतयः “मरुतः अपि “नः अस्माकं “शं शान्त्यै सन्तु। “विष्णुः व्यापकः “नः अस्माकं “शं शान्त्या अस्तु । “पूषा देवोऽपि “नः अस्माकं “शमु शान्त्या एव “अस्तु । “भवित्रं भुवनमन्तरिक्षमुदकं वा “नः अस्माकं “शं शान्त्या अस्तु । "वायुः अपि नः “शमु शान्त्या एव “अस्तु ।

शं नो॑ दे॒वः स॑वि॒ता त्राय॑माण॒ः शं नो॑ भवन्तू॒षसो॑ विभा॒तीः ।

शं न॑ः प॒र्जन्यो॑ भवतु प्र॒जाभ्य॒ः शं न॒ः क्षेत्र॑स्य॒ पति॑रस्तु श॒म्भुः ॥१०

शम् । न॒ः । दे॒वः । स॒वि॒ता । त्राय॑माणः । शम् । न॒ः । भ॒व॒न्तु॒ । उ॒षसः॑ । वि॒ऽभा॒तीः ।

शम् । न॒ः । प॒र्जन्यः॑ । भ॒व॒तु॒ । प्र॒ऽजाभ्यः॑ । शम् । न॒ः । क्षेत्र॑स्य । पतिः॑ । अ॒स्तु॒ । श॒म्ऽभुः ॥१०

शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु । उषसः । विऽभातीः ।

शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः । शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥१०

“देवः क्रीडनादिगुणयुक्तः “सविता “त्रायमाणः रक्षन् “नः अस्माकं “शं शान्त्यै भवतु । “विभातीः व्युच्छन्त्यः “उषसः अपि “नः अस्माकं “शं शान्त्यै “भवन्तु। “नः अस्माकं “प्रजाभ्यः “पर्जन्यः अपि “शं “भवतु । “शंभुः सुखस्य भावयिता “क्षेत्रस्य “पतिः “नः अस्माकं “शं शान्त्यै “अस्तु ॥ ॥ २९ ॥

शं नो॑ दे॒वा वि॒श्वदे॑वा भवन्तु॒ शं सर॑स्वती स॒ह धी॒भिर॑स्तु ।

शम॑भि॒षाच॒ः शमु॑ राति॒षाच॒ः शं नो॑ दि॒व्याः पार्थि॑वा॒ः शं नो॒ अप्या॑ः ॥११

शम् । न॒: । दे॒वाः । वि॒श्वऽदे॑वाः । भ॒व॒न्तु॒ । शम् । सर॑स्वती । स॒ह । धी॒भिः । अ॒स्तु॒ ।

शम् । अ॒भि॒ऽसाचः॑ । शम् । ऊं॒ इति॑ । रा॒ति॒ऽसाचः॑ । शम् । न॒: । दि॒व्याः । पार्थि॑वाः । शम् । न॒: । अप्याः॑ ॥११

शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह । धीभिः । अस्तु ।

शम् । अभिऽसाचः । शम् । ऊं इति । रातिऽसाचः । शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥११

“विश्वदेवाः बहुस्तोत्रकाः "देवाः “नः अस्माकं “शं शान्त्यै “भवन्तु । “सरस्वती च “धीभिः स्तुतिभिः कर्मभिर्वा “सह नोऽस्माकं “शं शान्त्यै “अस्तु । “अभिषाचः यज्ञमभितः सेवमानाश्च नः “शं शान्त्यै भवन्तु । “रातिषाचः दानं सेवमाना अपि “शमु शान्त्या एव भवन्तु । “दिव्याः दिवि भवाश्च “नः अस्माकं “शं शान्त्यै भवन्तु । “पार्थिवाः पृथिव्यां संभूताश्च नः शं भवन्तु । “अप्याः अप्स्वन्तरिक्षे भवाश्च । आकाशमापः' इत्यन्तरिक्षनामसु पाठात् । “नः अस्माकं “शं शान्त्यै भवन्तु ।।

शं न॑ः स॒त्यस्य॒ पत॑यो भवन्तु॒ शं नो॒ अर्व॑न्त॒ः शमु॑ सन्तु॒ गाव॑ः ।

शं न॑ ऋ॒भव॑ः सु॒कृत॑ः सु॒हस्ता॒ः शं नो॑ भवन्तु पि॒तरो॒ हवे॑षु ॥१२

शम् । न॒: । स॒त्यस्य॑ । पत॑यः । भ॒व॒न्तु॒ । शम् । न॒: । अर्व॑न्तः । शम् । ऊं॒ इति॑ । स॒न्तु॒ । गावः॑ ।

शम् । न॒: । ऋ॒भवः॑ । सु॒ऽकृतः॑ । सु॒ऽहस्ताः॑ । शम् । न॒: । भ॒व॒न्तु॒ । पि॒तरः॑ । हवे॑षु ॥१२

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् । ऊं इति । सन्तु । गावः ।

शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥१२

“सत्यस्य “पतयः पालकाः सत्यशीला देवाः “नः अस्माकं “शं शान्त्यै “भवन्तु। “अर्वन्तः अश्वाश्च “नः अस्माकं “शं शान्त्यै भवन्तु । “गावः अपि नः “शं शान्त्यै भवन्तु । “सुकृतः सुकर्माणः "सुहस्ताः शोभनहस्ताः “ऋभवः अपि “नः अस्माकं “शं शान्त्यै सन्तु। "हवेषु स्तोत्रेषु सत्सु “पितरः अपि “नः अस्माकं “शं शान्त्यै “भवन्तु ॥

शं नो॑ अ॒ज एक॑पाद्दे॒वो अ॑स्तु॒ शं नोऽहि॑र्बु॒ध्न्य१॒॑ः शं स॑मु॒द्रः ।

शं नो॑ अ॒पां नपा॑त्पे॒रुर॑स्तु॒ शं न॒ः पृश्नि॑र्भवतु दे॒वगो॑पा ॥१३

शम् । न॒: । अ॒जः । एक॑ऽपात् । दे॒वः । अ॒स्तु॒ । शम् । न॒: । अहिः॑ । बु॒ध्न्यः॑ । शम् । स॒मु॒द्रः ।

शम् । न॒: । अ॒पाम् । नपा॑त् । पे॒रुः । अ॒स्तु॒ । शम् । न॒: । पृश्निः॑ । भ॒व॒तु॒ । दे॒वऽगो॑पा ॥१३

शम् । नः । अजः । एकऽपात् । देवः । अस्तु । शम् । नः । अहिः । बुध्न्यः । शम् । समुद्रः ।

शम् । नः । अपाम् । नपात् । पेरुः । अस्तु । शम् । नः । पृश्निः । भवतु । देवऽगोपा ॥१३

“अज “एकपात् अज एकपान्नामधेयः "देवः “नः अस्माकं “शं शान्त्यै “अस्तु । “अहि र्बुध्न्यः च “नः अस्माकं “शं शान्त्या अस्तु । “समुद्रः अपि नः “शं शान्त्या अस्तु । “पेरुः उपद्रवेभ्यः पारयिता “अपां “नपात् अपांनपान्नामधेयोऽपि देवः “नः अस्माकं “शं शान्त्यै “अस्तु । "देवगोपा देवा गोपायितारो यस्यां सा “पृश्निः मरुतां माता “नः अस्माकं “शं शान्त्यै “भवतु ।।

आ॒दि॒त्या रु॒द्रा वस॑वो जुषन्ते॒दं ब्रह्म॑ क्रि॒यमा॑णं॒ नवी॑यः ।

शृ॒ण्वन्तु॑ नो दि॒व्याः पार्थि॑वासो॒ गोजा॑ता उ॒त ये य॒ज्ञिया॑सः ॥१४

आ॒दि॒त्याः । रु॒द्राः । वस॑वः । जु॒ष॒न्त॒ । इ॒दम् । ब्रह्म॑ । क्रि॒यमा॑णम् । नवी॑यः ।

शृ॒ण्वन्तु॑ । नः॒ । दि॒व्याः । पार्थि॑वासः । गोऽजा॑ताः । उ॒त । ये । य॒ज्ञिया॑सः ॥१४

आदित्याः । रुद्राः । वसवः । जुषन्त । इदम् । ब्रह्म । क्रियमाणम् । नवीयः ।

शृण्वन्तु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥१४

“नवीयः नवतरमस्माभिः “क्रियमाणम् “इदं “ब्रह्म स्तोत्रम् “आदित्याः दिव्याः। ‘अदितिर्द्यौः ' (ऋ. सं. १. ८९. १०) इति श्रुतेः । रुद्राः आन्तरिक्षाः “वसवः पार्थिवाश्च “जुषन्त जुषन्तां सेवन्ताम् । अन्ये "दिव्याः दिवि भवाः “पार्थिवासः पार्थिवाः “गोजाताः गोः पृश्नेर्जाताः । ‘नाको गौः' इति साधारणनामसु पाठात् । "उत अपि च "ये “यज्ञियासः यज्ञार्हास्ते सर्वेऽपि “नः अस्माकं हवं “शृण्वन्तु ॥

ये दे॒वानां॑ य॒ज्ञिया॑ य॒ज्ञिया॑नां॒ मनो॒र्यज॑त्रा अ॒मृता॑ ऋत॒ज्ञाः ।

ते नो॑ रासन्तामुरुगा॒यम॒द्य यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥१५

ये । दे॒वाना॑म् । य॒ज्ञियाः॑ । य॒ज्ञिया॑नाम् । मनोः॑ । यज॑त्राः । अ॒मृताः॑ । ऋ॒त॒ऽज्ञाः ।

ते । नः॒ । रा॒स॒न्ता॒म् । उ॒रु॒ऽगा॒यम् । अ॒द्य । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥१५

ये । देवानाम् । यज्ञियाः । यज्ञियानाम् । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः ।

ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१५

“यज्ञियानां यजनीयानां “देवानाम् अपि “यज्ञियाः यजनीयाः “मनोः प्रजापतेश्च “यजत्राः यजनीयाः "अमृताः मरणरहिताः “ऋतज्ञाः सत्यज्ञाः "ये देवाः सन्ति “ते सर्वे “उरुगायं बहुकीर्तिं पुत्रम् “अद्य “नः अस्मभ्यं “रासन्तां प्रयच्छन्तु । सिद्ध एवोत्तमः पादः ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टके तृतीयोऽध्यायः समाप्तः ॥

**मण्डल ७**

# ऋग्वेदः सूक्तं ७.३६


ऋग्वेदः - मण्डल ७

← सूक्तं ७.३५ | सूक्तं ७.३६ | सूक्तं ७.३७ →

मैत्रावरुणिर्वसिष्ठः।


दे. विश्वे देवाः । त्रिष्टुप्।

---

प्र ब्रह्मैतु सदनादृतस्य वि रश्मिभिः ससृजे सूर्यो गाः ।

वि सानुना पृथिवी सस्र उर्वी पृथु प्रतीकमध्येधे अग्निः ॥१॥

इमां वां मित्रावरुणा सुवृक्तिमिषं न कृण्वे असुरा नवीयः ।

इनो वामन्यः पदवीरदब्धो जनं च मित्रो यतति ब्रुवाणः ॥२॥

आ वातस्य ध्रजतो रन्त इत्या अपीपयन्त धेनवो न सूदाः ।

महो दिवः सदने जायमानोऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥३॥

गिरा य एता युनजद्धरी त इन्द्र प्रिया सुरथा शूर धायू ।

प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम् ॥४॥

यजन्ते अस्य सख्यं वयश्च नमस्विनः स्व ऋतस्य धामन् ।

वि पृक्षो बाबधे नृभि स्तवान इदं नमो रुद्राय प्रेष्ठम् ॥५॥

आ यत्साकं यशसो वावशानाः सरस्वती सप्तथी सिन्धुमाता ।

याः सुष्वयन्त सुदुघाः सुधारा अभि स्वेन पयसा पीप्यानाः ॥६॥

उत त्ये नो मरुतो मन्दसाना धियं तोकं च वाजिनोऽवन्तु ।

मा नः परि ख्यदक्षरा चरन्त्यवीवृधन्युज्यं ते रयिं नः ॥७॥

प्र वो महीमरमतिं कृणुध्वं प्र पूषणं विदथ्यं न वीरम् ।

भगं धियोऽवितारं नो अस्याः सातौ वाजं रातिषाचं पुरंधिम् ॥८॥

अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः ।

उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥९॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाष्टके चतुर्थोऽध्याय आरभ्यते । तत्र षडनुवाकात्मकस्य वासिष्ठस्य सप्तमस्य मण्डलस्य तृतीयेऽनुवाके द्वाविंशतिसूक्तानि । तत्र 'प्र ब्रह्म' इति नवर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं पूर्ववद्वैश्वदेवम् । अनुक्रान्तं च--- प्र ब्रह्म नव ' इति । विनियोगो लैङ्गिकः ॥

प्र ब्रह्मै॑तु सद॑नादृ॒तस्य॒ वि र॒श्मिभि॑ः ससृजे॒ सूर्यो॒ गाः ।

वि सानु॑ना पृथि॒वी स॑स्र उ॒र्वी पृ॒थु प्रती॑क॒मध्येधें अ॒ग्निः ॥१

प्र । ब्रह्म॑ । ए॒तु॒ । सद॑नात् । ऋ॒तस्य॑ । वि । र॒श्मिऽभि॑ः । स॒सृ॒जे॒ । सूर्य॑ः । गाः ।

वि । सानु॑ना । पृ॒थि॒वी । स॒स्रे॒ । उ॒र्वी । पृ॒थु । प्रती॑कम् । अधि॑ । आ । ई॒धे॒ । अ॒ग्निः ॥१

प्र । ब्रह्म । एतु । सदनात् । ऋतस्य । वि । रश्मिऽभिः । ससृजे । सूर्यः । गाः ।

वि । सानुना । पृथिवी । सस्रे । उर्वी । पृथु । प्रतीकम् । अधि । आ । ईधे । अग्निः ॥१

“ऋतस्य यज्ञस्य “सदनात् स्थानाद्देवयजनदेशात् "ब्रह्म स्तोत्रं स्तुत्यान् सूर्यादीन् “प्र “एतु प्रकर्षेण गच्छतु । किं तद्ब्रह्मेति तदाह । "सूर्यः सर्वस्य प्रेरकः शोभनवीर्यो वा देवः “रश्मिभिः आत्मीयैः किरणैः “गाः अपो वृष्ट्युदकानि “वि “ससृजे विसृजति विमुञ्चति । प्रवर्षति । श्रूयते हि - ‘ याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' (तै. आ. १०.६३) इति । स्मृतिश्च भवति – ‘आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति । अत ईदृशं माहात्म्यं सूर्यस्यैव विद्यते नान्यस्य कस्यचिदित्यनेन पादेन सूर्यः

स्तूयते । अपि च “पृथिवी प्रथिता भूमिः “सानुना समुच्छ्रितेन पर्वतादिना “उर्वी विस्तीर्णा सती “वि “सस्ने विसरति व्याप्नोति । तथा “अग्निः “पृथु विस्तीर्णं “प्रतीकं पृथिव्या अवयवं देवयजनलक्षणं स्थानम् “अधि । “अधिपरी अनर्थकौ इत्यधेः कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्ते°। इति सप्तम्यर्थे द्वितीया । ईदृशे स्थाने “एधे आदीप्यते ॥

इ॒मां वां॑ मित्रावरुणा सुवृ॒क्तिमि॒षं॒ न कृ॑ण्वे असुरा॒ नवीं॑यः ।

इ॒नो वा॑म॒न्यः प॑द॒वीरद॑ब्धो॒ जनं॑ च मि॒त्रो य॑तति ब्रुवा॒णः ॥२

इ॒माम् । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । सु॒ऽवृ॒क्तिम् । इषं॑म् । न । कृ॒ण्वे॒ । अ॒सु॒रा॒ । नवीं॑यः ।

इ॒नः । वा॒म् । अ॒न्यः । प॒द॒ऽवीः । अद॑ब्धः । जन॑म् । च॒ । मि॒त्रः । य॒त॒ति॒ । ब्रु॒वा॒णः ॥२

इमाम् । वाम् । मित्रावरुणा । सुऽवृक्तिम् । इषम् । न । कृण्वे । असुरा । नवीयः ।

इनः । वाम् । अन्यः । पदऽवीः । अदब्धः । जनम् । च । मित्रः । यतति । ब्रुवाणः ॥२

हे "असुरा असुरौ बलवन्तौ हे "मित्रावरुणा मित्रावरुणौ “वां युवाभ्याम् “इषं “न हषीरूपमन्नमिव “नवीयः नवीयसीम् “इमाम् अस्मदीयां पुरोवर्तिनीं "सुवृक्तिं स्तुतिं “कृण्वे अहं स्तोता करोमि। "वां युवयोः “अन्यः अन्यतरः "इनः प्रभुः “अदब्धः शत्रुभिरहिंसितो वरुणः “पदवीः पदस्य स्थानस्य प्रजनयिता। वरुणो हि धर्माधर्मयोर्धारयितेति पदवीरित्युच्यते । “ब्रुवाणः अस्माभिः स्तूयमानः “मित्रः “च “जनं सर्वं प्राणिजातं “यतति यातयति प्रवर्तयति । तथा च श्रूयते - मित्रो जनान्यातयति बुवाणः' (ऋ. सं. ३. ५९. ५) इति ॥

आ वात॑स्य॒ ध्रज॑तो रन्त इ॒त्या अपीं॑पयन्त धे॒नवो॒ न सूदा॑ः ।

म॒हो दि॒वः सद॑ने॒ जाय॑मा॒नोऽचिं॑क्रदद्वृष॒भः सस्मि॒न्नूध॑न् ॥३

आ । वात॑स्य । ध्रज॑तः । र॒न्ते॒ । इ॒त्याः । अपीं॑पयन्त । धे॒नवः॑ । न । सूदाः॑ ।

म॒हः । दि॒वः । सद॑ने । जाय॑मानः । अचिं॑क्रदत् । वृ॒ष॒भः । सस्मिं॑न् । ऊध॑न् ॥३

आ । वातस्य । ध्रजतः । रन्ते । इत्याः । अपीपयन्त । धेनवः । न । सूदाः ।

महः । दिवः । सदने । जायमानः । अचिक्रदत् । वृषभः । सस्मिन् । ऊधन् ॥३

“ध्रजतः गच्छतः “वातस्य वायोः “इत्याः गतयः “आ “रन्ते अभितो रमन्ते । तथा “सूदाः ।‘सूद प्रेरणे ' इति धातुः । क्षीरस्य प्रेरयित्र्यः “धेनवो “न । नेति चार्थे । गावश्च “अपीपयन्त प्यायन्ते एधन्ते । अपि च “महः महतः “दिवः द्योतमानस्यादित्यस्य “सदने स्थानेऽन्तरिक्षे “जायमानः उत्पद्यमानः “वृषभः वर्षणशीलः पर्जन्यः “सस्मिन्नूधन् तस्मिन् अन्तरिक्षे “अचिक्रदत् ॥

गि॒रा य ए॒ता यु॒नज॒द्धरीं॑ त॒ इन्द्र॑ प्रि॒या सु॒रथा॑ शूर धा॒यू ।

प्र यो म॒न्युं रिरि॑क्षतो मि॒नात्या सु॒क्रतु॑मर्य॒मणं॑ ववृत्याम् ॥४

गि॒रा । यः । ए॒ता । यु॒नज॑त् । हरी॒ इति॑ । ते॒ । इन्द्र॑ । प्रि॒या । सु॒ऽरथा॑ । शू॒र॒ । धा॒यू इति॑ ।

प्र । यः । म॒न्युम् । रिरि॑क्षतः । मि॒नाति॑ । आ । सु॒ऽक्रतु॑म् । अ॒र्य॒मणं॑म् । व॒वृ॒त्या॒म् ॥४

गिरा । यः । एता । युनजत् । हरी इति । ते । इन्द्र । प्रिया । सुऽरथा । शूर । धायू इति ।

प्र । यः । मन्युम् । रिरिक्षतः । मिनाति । आ । सुऽक्रतुम् । अर्यमणम् । ववृत्याम् ॥४

अस्याः पूर्वोऽर्धर्च इन्द्रस्तुतिरपरोऽर्यम्णः स्तुतिः । हे “शूर विक्रान्त “इन्द्र "ते तव “प्रिया प्रियौ “सुरथा सुष्ठुरंहणौ “धायू धारकौ “एता एतौ “हरी त्वदीयावश्वौ “यः जनः “गिरा स्तुतिरूपया वाचा “युनजत् रथे युञ्ज्यात् हे इन्द्र त्वम् अस्य यागमायाहीति शेषः । “यः अर्यमा “रिरिक्षतः हिंसितुमिच्छतः शत्रोः संबन्धिनं “मन्युं कोपं “प्र “मिनाति प्रकर्षेण हिनस्ति “सुक्रतुं शोभनकर्माणम् “अर्यमणम् “आ “ववृत्यां स्तुत्यावर्तयामि ॥

यज॑न्ते अस्य स॒ख्यं वय॑श्च नम॒स्विन॒ः स्व ऋ॒तस्य॒ धाम॑न् ।

वि पृक्षो॑ बाबधे॒ नृभि॒ः स्तवा॑न इ॒दं नमो॑ रु॒द्राय॒ प्रेष्ठ॑म् ॥५

यज॑न्ते । अ॒स्य॒ । स॒ख्यम् । वयः॑ । च॒ । न॒म॒स्विनः॑ । स्वे । ऋ॒तस्य॑ । धाम॑न् ।

वि । पृक्षः॑ । बा॒बु॒धे॒ । नृऽभिः॑ । स्तवा॑नः । इ॒दम् । नमः॑ । रु॒द्राय॑ । प्रेष्ठ॑म् ॥५

यजन्ते । अस्य । सख्यम् । वयः । च । नमस्विनः । स्वे । ऋतस्य । धामन् ।

वि । पृक्षः । बाबधे । नृऽभिः । स्तवानः । इदम् । नमः । रुद्राय । प्रेष्ठम् ॥५

अनया रुद्रः स्तूयते । “नमस्विनः हविर्लक्षणान्नवन्तः “स्वे स्वकीये “ऋतस्य यज्ञस्य “धामन् धामनि स्थाने । स्वकीये यज्ञगृहे स्थिता इत्यर्थः। “वयश्च गन्तारः कर्माणि कुर्वाणा यजमानाः “अस्य रुद्रस्य “सख्यं सखित्वमुद्दिश्य "यजन्ते पूजयन्ति । “नृभिः नेतृभिः “स्तवानः स्तूयमानो रुद्रः "पृक्षः अन्नं स्तोतृषु “वि “बाबधे विबध्नाति । ददातीत्यर्थः । “प्रेष्ठं रुद्रस्य प्रियतमम् “इदं “नमः तस्मै "रुद्राय मया क्रियते ॥ ॥ १ ॥

आ यत्सा॒कं य॒शसो॑ वावश॒ानाः सर॑स्वती स॒प्तथी॒ सिन्धु॑माता ।

याः सु॒ष्वय॑न्त सु॒दुघा॒ः सुधा॒रा अ॒भि स्वेन॒ पय॑सा॒ पीप्या॑नाः ॥६

आ । यत् । सा॒कम् । य॒शसः॑ । वा॒व॒शा॒नाः । सर॑स्वती । स॒प्तथी॑ । सिन्धु॑ऽमाता ।

याः । सु॒स्वय॑न्त । सु॒ऽदुघाः॑ । सु॒ऽधा॒राः । अ॒भि । स्वेन॑ । पय॑सा । पीप्या॑नाः ॥६

आ । यत् । साकम् । यशसः । वावशानाः । सरस्वती । सप्तथी । सिन्धुऽमाता ।

याः । सुस्वयन्त । सुऽदुघाः । सुऽधाराः । अभि । स्वेन । पयसा । पीप्यानाः ॥६

“यत् यासां गङ्गादीनां नदीनां मध्ये “सिन्धुमाता अपां मातृभूता “सरस्वती एतदाख्या नदी "सप्तथी सप्तमी भवति “सुदुघाः कामान् दोग्धुं सुशक्याः “सुधाराः शोभनधारो पेताश्च नद्यः "सुष्वयन्त सुष्वयन्ते। गतिकर्मैतत् । प्रवहन्ति । “स्वेन स्वकीयेन “पयसा उदकेन “अभि "पीप्यानाः “याः च अभिवर्धयन्त्यः “यशसः अन्नवत्यः "वावशानाः कामयमाना नद्यः “साकं युगपदेव “आ गच्छन्तु । आ इत्युपसर्गस्य योग्यक्रियाध्याहारः ॥

उ॒त त्ये नो॑ म॒रुतो॑ मन्दसा॒ना धियं॑ तो॒कं च॑ वा॒जिनो॑ऽवन्तु ।

मा न॒ः परि॑ ख्य॒दक्ष॑रा॒ चर॒न्त्यवी॑वृध॒न्युज्यं॒ ते र॒यिं न॑ः ॥७

उ॒त । त्ये । न॒ः । म॒रुत॑ः । म॒न्द॒सा॒नाः । धियं॑म् । तो॒कम् । च॒ । वा॒जिन॑ः । अ॒व॒न्तु॒ ।

मा । न॒ः । परि॑ । ख्य॒त् । अक्ष॑रा । चर॑न्ती । अवी॑वृधन् । युज्य॑म् । ते । र॒यिम् । न॒ः ॥७

उत । त्ये । नः । मरुतः । मन्दसानाः । धियम् । तोकम् । च । वाजिनः । अवन्तु ।

मा । नः । परि । ख्यत् । अक्षरा । चरन्ती । अवीवृधन् । युज्यम् । ते । रयिम् । नः ॥७

"उत अपि च “मन्दसानाः मोदमानाः “वाजिनः वेगवन्तः “त्ये ते “मरुतः “नः अस्मदीयं “धियं यज्ञाख्यं कर्म “तोकं “च अस्मदीयं पुत्रं च “अवन्तु रक्षन्तु । “अक्षरा व्याप्ता “चरन्ती वाग्देवता च “नः अस्मान् “परि त्यक्त्वा अस्मद्व्यतिरिक्तानन्यान् “मा “ख्यत् मा द्राक्षीत् । “ते पूर्वोक्ता मरुतो वाक्च “युज्यं युक्तमपि “नः अस्मदीयं “रयिं धनम् अवीवृधन् वर्धयन्तु ॥

प्र वो॑ म॒हीम॒रम॑तिं कृणुध्वं॒ प्र पू॒षणं॑ विद॒थ्यं१॒॑ न वी॒रम् ।

भगं॑ धि॒यो॑ऽवि॒तारं॑ नो अ॒स्याः सा॒तौ वाजं॑ राति॒षाचं॒ पुरं॑धिम् ॥८

प्र । व॒ः । म॒हीम् । अ॒रम॑तिम् । कृ॒णु॒ध्व॒म् । प्र । पू॒षणं॑म् । वि॒द॒थ्यं॑म् । न । वी॒रम् ।

भगं॑म् । धि॒यः । अ॒वि॒तार॑म् । न॒ः । अ॒स्याः । सा॒तौ । वाजं॑म् । रा॒ति॒ऽसाचं॑म् । पुरं॑म्ऽधिम् ॥८

प्र । वः । महीम् । अरमतिम् । कृणुध्वम् । प्र । पूषणम् । विदथ्यम् । न । वीरम् ।

भगम् । धियः । अवितारम् । नः । अस्याः । सातौ । वाजम् । रातिऽसाचम् । पुरम्ऽधिम् ॥८

हे स्तोतारः “वः यूयम् “अरमतिम् उपरतिरहितां “महीं महतीं भूमिं “प्र “कृणुध्वम् आह्वयत । तथा “विदथ्यं यज्ञार्हं “वीरं “न सर्वेषां प्रेरकं च “पूषणम् एतन्नामकं देवं “प्र कृणुध्वम् । तथा “अस्याः “धियः “नः अस्मदीयस्यास्य कर्मणः “अवितारं रक्षितारं “भगं देवं

चाह्वयत । अपि च “सातौ अस्मदीये यज्ञे युद्धे वा “वाजम् ऋभूणामन्यतमं देवमाह्वयत । कीदृशं वाजम् । “रातिषाचं दानसेवकं “पुरंधिं पुराणां धारयितारम् ॥

यज्ञपुच्छे अच्छायं वः' इति चमसिनः स्वं स्वं चमसमभिमृशेयुः । सूत्रितं च - अच्छायं वो मरुतः श्लोक एत्वित्येतयाभिमृशन्ति' (आश्व. श्रौ. ६. १२) इति ॥

अच्छा॒यं वो॑ मरुत॒ः श्लोक॑ ए॒त्वच्छा॒ विष्णुं॑ निषिक्त॒पामवो॑भिः ।

उ॒त प्र॒जायै॑ गृण॒ते वयो॑ धुर्यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥९

अच्छ॑ । अ॒यम् । व॒ः । म॒रु॒त॒ः । श्लोकः॑ । ए॒तु॒ । अच्छ॑ । विष्णु॑म् । नि॒सि॒क्त॒ऽपाम् । अवः॑ऽभिः ।

उ॒त । प्र॒ऽजायै॑ । गृ॒ण॒ते । वयः॑ । धु॒ः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥९

अच्छ । अयम् । वः । मरुतः । श्लोकः । एतु । अच्छ । विष्णुम् । निसिक्तऽपाम् । अवःऽभिः ।

उत । प्रऽजायै । गृणते । वयः । धुः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥९

हे “मरुतः “वः युष्मान् "अयं “श्लोकः अस्मदीयमिदं स्तोत्रम् "अच्छ “एतु अभिगच्छतु । “निषिक्तपां निषिक्तस्य गर्भस्य रक्षितारम् । यद्वा । चमसे निषिक्तानां सोमानां पातारम् । “अवोभिः अस्मद्विषयरक्षणैर्युक्तं “विष्णुं चास्मदीयं स्तोत्रम् "अच्छ एतु । “उत अपि च मरुतो विष्णुश्च "गृणते स्तुवते मह्यं "प्रजायै पुत्ररूपां प्रजां “वयः अन्नं च “धुः अधुः दधतु । हे मरुतो हे विष्णो “यूयं “स्वस्तिभिः अविनाशैः “नः अस्मान् “सदा सर्वदा "पात रक्षत ॥ ॥ १॥

**मण्डल ७**

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं ७.१ | सूक्तं ७.२१ | सूक्तं ७.४१ | सूक्तं ७.६१ | सूक्तं ७.८१ | |
| सूक्तं ७.२ | सूक्तं ७.२२ | सूक्तं ७.४२ | सूक्तं ७.६२ | सूक्तं ७.८२ | |
| सूक्तं ७.३ | सूक्तं ७.२३ | सूक्तं ७.४३ | सूक्तं ७.६३ | सूक्तं ७.८३ | |
| सूक्तं ७.४ | सूक्तं ७.२४ | सूक्तं ७.४४ | सूक्तं ७.६४ | सूक्तं ७.८४ | |
| सूक्तं ७.५ | सूक्तं ७.२५ | सूक्तं ७.४५ | सूक्तं ७.६५ | सूक्तं ७.८५ | |
| सूक्तं ७.६ | सूक्तं ७.२६ | सूक्तं ७.४६ | सूक्तं ७.६६ | सूक्तं ७.८६ | |
| सूक्तं ७.७ | सूक्तं ७.२७ | सूक्तं ७.४७ | सूक्तं ७.६७ | सूक्तं ७.८७ | |
| सूक्तं ७.८ | सूक्तं ७.२८ | सूक्तं ७.४८ | सूक्तं ७.६८ | सूक्तं ७.८८ | |
| सूक्तं ७.९ | सूक्तं ७.२९ | सूक्तं ७.४९ | सूक्तं ७.६९ | सूक्तं ७.८९ | सूक्तं ७.१०१ |
| सूक्तं ७.१० | सूक्तं ७.३० | सूक्तं ७.५० | सूक्तं ७.७० | सूक्तं ७.९० | सूक्तं ७.१०२ |
| सूक्तं ७.११ | सूक्तं ७.३१ | सूक्तं ७.५१ | सूक्तं ७.७१ | सूक्तं ७.९१ | सूक्तं ७.१०३ |
| सूक्तं ७.१२ | सूक्तं ७.३२ | सूक्तं ७.५२ | सूक्तं ७.७२ | सूक्तं ७.९२ | सूक्तं ७.१०४ |
| सूक्तं ७.१३ | सूक्तं ७.३३ | सूक्तं ७.५३ | सूक्तं ७.७३ | सूक्तं ७.९३ | |
| सूक्तं ७.१४ | सूक्तं ७.३४ | सूक्तं ७.५४ | सूक्तं ७.७४ | सूक्तं ७.९४ | |
| सूक्तं ७.१५ | सूक्तं ७.३५ | सूक्तं ७.५५ | सूक्तं ७.७५ | सूक्तं ७.९५ | |
| सूक्तं ७.१६ | सूक्तं ७.३६ | सूक्तं ७.५६ | सूक्तं ७.७६ | सूक्तं ७.९६ | |
| सूक्तं ७.१७ | सूक्तं ७.३७ | सूक्तं ७.५७ | सूक्तं ७.७७ | सूक्तं ७.९७ | |
| सूक्तं ७.१८ | सूक्तं ७.३८ | सूक्तं ७.५८ | सूक्तं ७.७८ | सूक्तं ७.९८ | |
| सूक्तं ७.१९ | सूक्तं ७.३९ | सूक्तं ७.५९ | सूक्तं ७.७९ | सूक्तं ७.९९ | |
| सूक्तं ७.२० | सूक्तं ७.४० | सूक्तं ७.६० | सूक्तं ७.८० | सूक्तं ७.१०० | |

# ऋग्वेदः सूक्तं ७.३७



दे. विश्वे देवाः। त्रिष्टुप्।

---

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः ।

अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥१॥

यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तम् ।

सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम् ॥२॥

उवोचिथ हि मघवन्देष्णं महो अर्भस्य वसुनो विभागे ।

उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥३॥

त्वमिन्द्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा ।

वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः ॥४॥

सनितासि प्रवतो दाशुषे चिद्याभिर्विवेषो हर्यश्व धीभिः ।

ववन्मा नु ते युज्याभिरूती कदा न इन्द्र राय आ दशस्येः ॥५॥

वासयसीव वेधसस्त्वं नः कदा न इन्द्र वचसो बुबोधः ।

अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युहीत वाजी ॥६॥

अभि यं देवी निरृतिश्चिदीशे नक्षन्त इन्द्रं शरदः सुपृक्षः ।

उप त्रिबन्धुर्जरदष्टिमेत्यस्ववेशं यं कृणवन्त मर्ताः ॥७॥

आ नो राधांसि सवित स्तवध्या आ रायो यन्तु पर्वतस्य रातौ ।

सदा नो दिव्यः पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः ॥८॥

**सायणभाष्यम्**

‘आ वो वाहिष्ठः ' इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अनुक्रम्यते च - ‘आ वोऽष्टौ ' इति । विनियोगो लैङ्गिकः ॥

आ वो॒ वाहि॑ष्ठो वहतु स्त॒वध्यै॑ रथो॑ वाजा ऋभुक्षणो॒ अमृ॑क्तः ।

अ॒भि त्रि॑पृ॒ष्ठैः सव॑नेषु॒ सोमै॒र्मदे॑ सुशिप्रा म॒हभि॑ः पृणध्वम् ॥१

आ । व॒ः । वाहि॑ष्ठः । व॒ह॒तु॒ । स्त॒वध्यै॑ । रथः॑ । वा॒जा॒ः । ऋ॒भु॒क्ष॒ण॒ः । अमृ॑क्तः ।

अ॒भि । त्रि॑ऽपृ॒ष्ठैः । सव॑नेषु । सोमैः॑ । मदे॑ । सु॒ऽशि॒प्रा॒ः । म॒हऽभिः॑ । पृ॒ण॒ध्व॒म् ॥१

आ । वः । वाहिष्ठः । वहतु । स्तवध्यै । रथः । वाजाः । ऋभुक्षणः । अमृक्तः ।

अभि । त्रिऽपृष्ठैः । सवनेषु । सोमैः । मदे । सुऽशिप्राः । महऽभिः । पृणध्वम् ॥१

अनेन द्वृचेन ऋभवः स्तूयन्ते। “ऋभुक्षणः विस्तीर्णस्य तेजसो निवासभूता हे "वाजाः ऋभवः “वाहिष्ठः वोढृतमः “स्तवध्यै स्तोतुमर्हः “अमृक्तः केनाप्यहिंसितो युष्मदीयः “रथः “वः युष्मान् “आ “वहतु आ समन्तादस्मदीयं यज्ञं प्रापयतु । हे “सुशिप्राः शोभनहनवः यूयं तेन रथेनागत्य “सवनेषु अस्मदीययज्ञेषु "मदे मदनिमित्ते “त्रिपृष्ठैः क्षीरदधिसक्तुमिश्रैः "महभिः महद्भिः “सोमैः “अभि "पृणध्वं युष्मदीयं जठरमभिपूरयत । स रथो युष्मानावहत्विति पूर्वेणान्वयः ।।

यू॒यं ह॒ रत्नं॑ म॒घव॑त्सु धत्थ स्व॒र्दृश॑ ऋभुक्षणो॒ अमृ॑क्तम् ।

सं य॒ज्ञेषु॑ स्वधावन्तः पिबध्वं॒ वि नो॒ राधां॑सि म॒तिभि॑र्दयध्वम् ॥२

यू॒यम् । ह॒ । रत्नं॑म् । म॒घव॑त्ऽसु । ध॒त्थ॒ । स्व॒ःऽदृशः॑ । ऋ॒भु॒क्ष॒ण॒ः । अमृ॑क्तम् ।

सम् । य॒ज्ञेषु॑ । स्व॒धा॒ऽव॒न्त॒ः । पि॒ब॒ध्व॒म् । वि । न॒ः । राधां॑सि । म॒तिऽभिः॑ । द॒य॒ध्व॒म् ॥२

यूयम् । ह । रत्नम् । मघवत्ऽसु । धत्थ । स्वःऽदृशः । ऋभुक्षणः । अमृक्तम् ।

सम् । यज्ञेषु । स्वधाऽवन्तः । पिबध्वम् । वि । नः । राधांसि । मतिऽभिः । दयध्वम् ॥२

हे "ऋभुक्षणः हे ऋभवः "स्वर्दृशः स्वर्गं पश्यन्तः "यूयं "ह यूयमेव "मघवत्सु हविर्लक्षणान्नवत्स्वस्मासु निमित्तेषु "अमृक्तम् अहिंसितम्। चोरादिभिर्नापहृतमित्यर्थः । "रत्नं रमणीयं "धत्थ धारयथ। तदनन्तरं "स्वधावन्तः बलवन्तस्ते यूयं "यज्ञेषु अस्मदीययज्ञेषु "सं "पिबध्वं सम्यक् सोमं पिबत । अपि च यूयं "मतिभिः धनहेतुभिः "नः अस्मभ्यं "राधांसि धनानि "वि "दयध्वं विशेषेण दत्त ।।

उवोचिंथ हि मंघवन्देष्णं महो अर्भंस्य वसुंनो विभागे ।

उभा तें पूर्णा वसुंना गभंस्ती न सूनृता नि यंमते वसव्यां ॥३

उवोचिंथ । हि । मघऽवन् । देष्णम् । महः । अर्भंस्य । वसुंनः । विऽभागे ।

उभा । ते । पूर्णा । वसुंना । गभंस्ती इतिं । न । सूनृतां । नि । यमते । वसव्यां ॥३

उवोचिथ । हि । मघऽवन् । देष्णम् । महः । अर्भस्य । वसुनः । विऽभागे ।

उभा । ते । पूर्णा । वसुना । गभस्ती इति । न । सूनृता । नि । यमते । वसव्या ॥३

' उवोचिथ ' इत्याद्याः पञ्चर्च इन्द्रदेवताकाः। हे "मघवन् धनवन्निन्द्र त्वं "महः महतः "अर्भस्य अल्पस्य च "वसुनः धनस्य "विभागे परिचरणानुकूले दाननिमित्ते "देष्णं धनम् "उवोचिथ "हि सेवसे खलु। उचतिः सेवाकर्मा। तथा "ते त्वदीयौ "उभा उभौ "गभस्ती बाहू "वसुना धनेन "पूर्णा संपूर्णौ भवतः । ते त्वदीया "सूनृता वाक् "वसव्या वसूनि धनानि "न "नि "यमते न नियच्छति । यद्वा । वसव्या वसुषु धनेषु साधुः सूनृता वाक् धनेन संपूर्णौ त्वदीयौ बाहू न नियच्छति । नाल्पं प्रदापयतीत्यर्थः ॥ ।

त्वमिंन्द्र स्वयंशा ऋभुक्षा वाजो न साधुरस्तंमेष्यृक्वां ।

वयं नु तें दाश्वांसः स्याम ब्रह्मं कृण्वन्तों हरिवो वसिंष्ठाः ॥४

त्वम् । इन्द्र । स्वऽयंशाः । ऋभुक्षाः । वाजः । न । साधुः । अस्तंम् । एषि । ऋक्वां ।

वयम् । नु । ते । दाश्वांसः । स्याम । ब्रह्मं । कृण्वन्तः । हरिऽवः । वसिंष्ठाः ॥४

त्वम् । इन्द्र । स्वऽयशाः । ऋभुक्षाः । वाजः । न । साधुः । अस्तम् । एषि । ऋक्वा ।

वयम् । नु । ते । दाश्वांसः । स्याम । ब्रह्म । कृण्वन्तः । हरिऽवः । वसिष्ठाः ॥४

हे इन्द्र "स्वयशाः असाधारणकीर्तिः "ऋभुक्षाः ऋभुनिवासकः ऋभूणामीश्वरो वा "त्वं "साधुः साधकः "वाजः "न अन्नमिव "ऋक्वा ऋक्वणः स्तोतुर्मम "अस्तं गृहम् "एषि प्राप्नुहि । "नु अद्य "वसिष्ठाः एतत्संज्ञका ऋषयः "वयं हे "हरिवः स्वकीयाश्वोपेतेन्द्र "ते त्वदर्थं "दाश्वांसः हविर्लक्षणान्नं दत्तवन्तः "ब्रह्म स्तोत्रं "कृण्वन्तः कुर्वन्तः सन्तः "स्याम भवेम ।

सनिंतासि प्रवतों दाशुषें चिद्याभिर्विवेंषो हर्यश्व धीभिः ।

ववन्मा नु ते युज्यांभिरूती कदा नं इन्द्र राय आ दंशस्येः ॥५

सनिंता । असि । प्रऽवतः । दाशुषें । चित् । याभिः । विवेंषः । हरिऽअश्व । धीभिः ।

ववन्म । नु । ते । युज्यांभिः । ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥५

सनिता । असि । प्रऽवतः । दाशुषे । चित् । याभिः । विवेषः । हरिऽअश्व । धीभिः ।

ववन्म । नु । ते । युज्याभिः । ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥५

हे “हर्यश्व हरिनामकाश्वेन्द्र त्वं “याभिः “धीभिः अस्मदीयाभिः स्तुतिभिः “विवेषः व्याप्नोषि स त्वं “दाशुषे “चित् हविर्दत्तवते यजमानायापि “प्रवतः प्रवणस्य धनस्य “सनिता “असि दाता भवसि । अपि च हे इन्द्र त्वं “नः अस्मभ्यं “कदा कस्मिन् काले “रायः धनानि “आ “दशस्येः प्रयच्छेः । “नु अद्य “ते तव “युज्याभिः योग्याभिः “ऊती उतिभी रक्षाभिः “ववन्म त्वां संभजेम ॥ ॥ ३ ॥

वासयंसीव वेधसस्त्वं नंः कदा नं इन्द्र वचंसो बुबोधः ।

अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युंहीत वाजी ॥६

वासयंसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र । वचंसः । बुबोधः ।

अस्तंम् । तात्या । धिया । रयिम् । सुऽवीरंम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥६

वासयसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र । वचसः । बुबोधः ।

अस्तम् । तात्या । धिया । रयिम् । सुऽवीरम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥६

हे इन्द्र “त्वं “कदा कस्मिन् काले “नः अस्मदीयं “वचसः वचोरूपं स्तोत्रं “बुबोधः अवगच्छेः। तथा स त्वं “वेधसः स्तोतॄनस्मान् “वासयसीव। इवेदानीमर्थे । इदानीं स्वकीये स्थानेऽवस्थापयसि । किंच “वाजी बलवान् “अर्वा वेगवांस्त्वदीयोऽश्वः । “तात्या। तनोतेरिदं रूपम्। संततया “धिया अस्मत्प्रेरितया स्तुत्या हेतुभूतया “सुवीरं शोभनपुत्रोपेतं “रयिं त्वदीयं धनं "पृक्षः अन्नं च “नः अस्मदीयम् “अस्तं गृहं “नि उहीत निवहेत् ॥

अभि यं देवी निरृंतिश्चिदीशे नक्षंन्त इन्द्रं शरदंः सुपृक्षंः ।

उपं त्रिबन्धुर्जरदंष्टिमेत्यस्ववेशं यं कृणवंन्त मर्ताः ॥७

अभि । यम् । देवी । निःऽऋंतिः । चित् । ईशें । नक्षंन्ते । इन्द्रंम् । शरदः । सुऽपृक्षः ।

सं॒व॒त्स॒रे प्रा॒वृष्याग॑तायां त॒प्ता घ॒र्मा अ॑श्नुवते विस॒र्गम् ॥९

दे॒वऽहिं॑तिम् । जु॒गु॒पुः॒ । द्वा॒द॒शस्य॑ । ऋ॒तुम् । नरः॑ । न । प्र । मि॒न॒न्ति॒ । ए॒ते ।

सं॒व॒त्स॒रे । प्रा॒वृषिं॑ । आऽग॑तायाम् । त॒प्ताः । घ॒र्माः॑ । अ॒श्नु॒व॒ते॒ । वि॒ऽस॒र्गम् ॥९

देवऽहितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न । प्र । मिनन्ति । एते । - संवत्सरे । प्रावृषि । आऽगतायाम् । तप्ताः । घर्माः । अश्नुवते । विऽसर्गम् । । ९ ।।

नरः नेतारः एते मण्डूकाः देवहितिं देवैः कृतं विधानम् अस्यर्तोरयं धर्म इत्येवंरूपं जुगुपुः गोपायन्ति । काले काले रक्षन्ति । अत एव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्य ऋतुं तं तं वसन्तादिकं न प्र मिनन्ति न हिंसन्ति । पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवो भवन्तीत्यर्थः । संवत्सरे संपूर्णे प्रावृषि वर्षर्तौ आगतायाम् आगते सति घर्माः पूर्वं घर्मकाले वर्तमानाः तप्ताः तापेन पीडिताः संप्रति विसर्गं विसर्जनं बिलान्मोचनम् अश्नुवते प्राप्नुवन्ति ।।

गोमा॑युरदाद॒जमा॑युरदा॒त्पृश्नि॑रदा॒द्धरि॑तो नो॒ वसू॑नि ।

गवां॑ म॒ण्डूका॒ दद॑तः श॒तानि॑ सहस्रसा॒वे प्र ति॑रन्त॒ आयुः॑ ॥१०

गोऽमा॑युः । अ॒दा॒त् । अ॒जऽमा॑युः । अ॒दा॒त् । पृश्निः॑ । अ॒दा॒त् । हरि॑तः । नः॒ । वसू॑नि ।

गवा॑म् । म॒ण्डूकाः॑ । दद॑तः । श॒तानि॑ । स॒ह॒स्र॒ऽसा॒वे । प्र । ति॒र॒न्ते॒ । आयुः॑ ॥१०

गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः । अदात् । हरितः । नः । वसूनि ।

गवाम् । मण्डूकाः । ददतः । शतानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ।। १० ।।

गोमायुः गोरिव मायुः शब्दो यस्य तादृशो मण्डूकः वसूनि धनानि नः अस्मभ्यम् अदात् ददातु । अजमायुः च अदात् ददातु । हरितः हरितवर्णश्च अदात् ददातु । पृश्निः पृश्निवर्णश्च अदात् ददातु । तथा सहस्रसावे सहस्रसंख्याका ओषधयः सूयन्त उत्पद्यन्त इति वर्षर्तुः सहस्रसावः । तस्मिन् सति सर्वे मण्डूकाः गवां शतानि अपरिमिता गाः ददतः अस्मभ्यं प्रयच्छन्तः आयुः जीवनं प्र तिरन्ते प्रवर्धयन्तु ।। ।। ४ ।।

---

७.१०३.७

अतिरात्रोपरि टिप्पणी (http://puranastudy.page.tl/Atiraatra-%26%232309%3B%26%232340%3B%26%232367%3B%26%232352%3B%26%232366%3B%26%232340%3B%26%232381%3B%26%232352%3B.htm)

**टिप्पणी**

ऋग्वेद ७.१०३.५ अनुसारेण मण्डूकानां मध्ये अन्यः अन्यस्य मण्डूकस्य वाचं वदति। अतएव अयं स्थितिः शाक्तस्थितिरस्ति, स्मृतिजन्यात्मकं स्थितिरस्ति, प्रतिध्वनिरस्ति। नायं वाक् श्रौतप्रकारा अस्ति, अपितु स्मार्तप्रकारा अस्ति। माण्डूकेयीसंहिताविषये ऐतरेयारण्यकस्य कथनमस्ति यत् षकारः प्राण आत्मा अस्ति एवं णकारः तस्य बलमस्ति। अयं कथनं मण्डूकस्य संदर्भे चक्षुरुन्मीलनकं अस्ति। षकारस्य वर्गीकरणं ऊष्माणवर्णेषु अस्ति। य र ल व वर्णानां संज्ञा अन्तस्थाः अस्ति, श, ष, स वर्णानां ऊष्माणं। ऊष्मा शब्दोपरि टिप्पणी (https://sites.google.com/site/puranicsubjectindex/uurdhvadrishti-uuha/uushmaa) पठनीयमस्ति। भागवतपुराणानुसारेण - ऊष्माणं इन्द्रियाण्याहुः अन्तस्थाः बलमात्मनः। अपि च, श, ष वर्णाः मूलाधारस्य बीजवर्णौ भवतः। यदि मण्डूकस्य प्राण आत्मा षकारः अस्ति, अयं संकेतमस्ति यत् या ऊर्जा यातयामा, व्ययीकृतास्ति, सा मण्डूकस्य प्राण - आत्मा भवति। शतपथ ब्राह्मणानुसारेण, अग्नेः संस्कुर्वाणे या आपः दूषिताः अभवन्, ते समस्कन्दंस्ते मण्डूका अभवन्। ब्राह्मणग्रन्थेषु सार्वत्रिकरूपेण कथनमस्ति यत् अग्निचयने पञ्चमचित्याः चयनोपरि शतरुद्रीयं होमं एवं तत्पश्चात् मण्डूकविकर्षणं कृत्यं भवति। मण्डूकं वंशे प्रबध्य तस्य विकर्षणं चित्योपरि विभिन्नेषु प्रकारेण कृतं भवति एवं तदोपरि सः मण्डूकः उत्करे प्रक्षिप्तं भवति। कथनमस्ति यत् अग्नेः यः शुचं, शुकं, दोषमस्ति, तत् सर्वं मण्डूके प्रवेशयन्ति।

योगवासिष्ठे ३.२४.५० शुक्रस्य वाहनं भेकः अस्ति।

मण्डूकस्य प्लवगतिः प्रसिद्धमस्ति। कथासरित्सागरे भेकस्य वाहनं सर्पः भवति। सर्पस्य गति सर्पणप्रकारा अस्ति।

मण्डूकस्य समानार्थकशब्देषु भेकः एवं दर्दुरः उल्लेखनीयाः सन्ति। शब्दकल्पद्रुमानुसारेण भेकशब्दस्य मूलं बिभेति अस्ति। दर्दुरस्य मूलं दॄ - विदारणे अस्ति। दर्दुरस्य शब्दः कर्णानां दारणं करोति।

संदर्भाः

एतद्वै यत्रैतं प्राणा ऋषयोऽग्रे ऽग्निं समस्कुर्वंस्तमद्भिरवोक्षंस्ता आपः समस्कन्दंस्ते मण्डूका अभवन् । माश ९,१.२.२१ ।

तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सः । माश ९, १, २,२४ ।

एष ( मण्डूकः) वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयति । तैसं ५.४.४.३ ।

पर्जन्याय मण्डूकान् (आलभते) - मै. ३.१४.२

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः । शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥ऋ. ९.११२.४ ॥

अवका वेतसशाखां मण्डूकं च दीर्घवंशे प्रबध्य समुद्रस्य त्वावाकयेति सप्तभिरष्टाभिर्वाग्निं विकर्षति ।। विकर्षन्नेवानुगमयित्वा मण्डूकस्य प्राणान्सर्वान्संलोभ्योत्कर उदस्येति ।। यं द्विष्यात्तमेतैरुपस्पृशेत् - आप.श्रौ.सू. १७.१२.९

अपो निषिञ्चन्न् असुरः पिता नः श्वसन्तु गर्गरा अपां वरुणाव नीचीरपः सृज । वदन्तु पृश्निबाहवो मण्डूका इरिणानु ॥१२॥ संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥१३॥ उपप्रवद मण्डूकि वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ॥शौ.अ. ४.१५.१४ ॥

अध्यर्धेळा तृतीयस्याह्नो ऽध्यर्धेळा पञ्चमस्य। स यथा मण्डूक इट्कुर्याद् एवम् अत्रेट्कुर्यात्। तेनैव पञ्चमम् अहर् अयातयाम क्रियते।– जै.ब्रा. ३.४९

अश्ववद्भवति प्रजात्यै यथा मण्डूक आट्करोत्येवं निधनमुपयन्त्ययातयामतायै – ताण्ड्य ब्रा. १२.४.१६

स्तेगान्दँष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति – तै.ब्रा. ३.९.११.१

तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा, इति - - - - । यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ता-विति ह स्माऽऽह ह्रस्वो माण्डूकेयः, इति । - ऐ.आ. ३.२.६

वाक्पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः, इति । अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति, इति । समानमेनयोरत्र पितुश्च पुत्रस्य च, इति । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः, इति । स य एवमेतां सहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति, इति । इति नु माण्डूकेयानाम्, इति ।। - ऐ.आ. ३.१.१

शीतिके शीतिकावति ह्लादुके ह्लादुकावति । मण्डूक्यासु संगमयेम१ँ स्वग्नि१ँ शमय, इति । शं ते धन्वन्या आपः शमु ते सन्त्वनूक्याः । शं ते समुद्रिया आपः शमु ते सन्तु वर्ष्याः, इति । शं ते स्रवन्तीस्तनुवे शमु ते सन्तु कूप्याः । शं ते नीहारो वर्षतु शमु पृष्वाऽवशीयताम् (१), इति । तै.आ. ६.४.१

आयुर्वेदानुसारेण मण्डूकोपरि टिप्पणी (https://puranastudy.wordpress.com/%e0%a4%ae%e0%a4%a3%e0%a4%bf%e0%a4%95%e0%a5%81%e0%a4%a3%e0%a5%8d%e0%a4%a1%e0%a4%b2-%e0%a4%ae%e0%a4%a3%e0%a5%8d%e0%a4%a1%e0%a5%82%e0%a4%95/%e0%a4%ae%e0%a4%a3%e0%a5%8d%e0%a4%a1%e0%a5%82%e0%a4%95/)

# ऋग्वेदः सूक्तं ७.१०४


ऋग्वेदः - मण्डल ७

← सूक्तं ७.१०३

सूक्तं ७.१०४

मैत्रावरुणिर्वसिष्ठः।


दे. (राक्षोघ्नं) इन्द्रासोमौ, ८, १६, १९-२२ इन्द्रः, ९, १२-१३ सोमः, १०, १४ अग्निः, ११ देवाः, १७ ग्रावाणः, १८ मरुतः, २३ (पूर्वार्धस्य) वसिष्ठाशीः, (उत्तरार्धस्य) पृथिव्यन्तरिक्षे। त्रिष्टुप्, १ - त्र, २१, २३ जगती, ७ जगती त्रिष्टुब्वा, २५ अनुष्टुप्।

---

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।

परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥१॥

इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु चरुरग्निवाँ इव ।

ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥२॥

इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।

यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥३॥

इन्द्रासोमा वर्तयतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणम् ।

उत्तक्षतं स्वर्यं पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥४॥

इन्द्रासोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।

तपुर्वधेभिरजरेभिरत्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ॥५॥

इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना ।

यां वां होत्रां परिहिनोमि मेधयेमा ब्रह्माणि नृपतीव जिन्वतम् ॥६॥

प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावतः ।
इन्द्रासोमा दुष्कृते मा सुगं भूद्यो नः कदा चिदभिदासति द्रुहा ॥७॥
यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥८॥
ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान्प्रददातु सोम आ वा दधातु निरृतेरुपस्थे ॥९॥
यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् ।
रिपु स्तेन स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा तना च ॥१०॥
परः सो अस्तु तन्वा तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥११॥
सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥१२॥
न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥१३॥
यदि वाहमनृतदेव आस मोघं वा देवाँ अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निरृथं सचन्ताम् ॥१४॥
अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥१५॥
यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ॥१६॥
प्र या जिगाति खर्गलेव नक्तमप द्रुहा तन्वं गूहमाना ।
वव्राँ अनन्ताँ अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥१७॥
वि तिष्ठध्वं मरुतो विक्ष्विच्छत गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वी पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे ॥१८॥
प्र वर्तय दिवो अश्मानमिन्द्र सोमशितं मघवन्सं शिशाधि ।

प्राक्तादपाक्तादधरादुदक्तादभि जहि रक्षसः पर्वतेन ॥१९॥

एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।

शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥२०॥

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्याविवासताम् ।

अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्सत एति रक्षसः ॥२१॥

उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।

सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥२२॥

मा नो रक्षो अभि नड्यातुमावतामपोच्छतु मिथुना या किमीदिना ।

पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥२३॥

इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।

विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्सूर्यमुच्चरन्तम् ॥२४॥

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।

रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥२५॥

**सायणभाष्यम्**

‘इन्द्रासोमा' इति पञ्चविंशत्यृचं पञ्चदशं सूक्तं वसिष्ठस्यार्षम् । आद्याः षट् जगत्यः सप्तमी जगती त्रिष्टुब्वाष्टादश्येकविंशीत्रयोविंश्यो जगत्योऽन्त्या प्रति चक्ष्व' इत्यनुष्टुप् शिष्टाश्चतुर्दश त्रिष्टुभः । नवमीद्वादशीत्रयोदश्यः सोमदेवत्या एकादशी देवदेवत्याष्टमीषोडश्याविन्द्रदेवताके सप्तदशी ग्रावदेवत्याष्टादशी मरुद्देवताका दशमीचतुर्दश्यावग्निदेवताके ‘प्र वर्तय' इत्याद्याः पञ्चर्च इन्द्रदेवताकाः । ‘मा नो रक्ष' इति त्रयोविंश्याः पूर्वोऽर्धर्चो वसिष्ठस्य प्रार्थनापरः । अतस्तद्देवताकः । उत्तरोऽर्धर्चः पृथिव्यन्तरिक्षदेवत्यः । शिष्टानां रक्षोहणाविन्द्रासोमौ देवता । तथा चानुक्रान्तम्’ -- इन्द्रासोमा पञ्चाधिकैन्द्रासोमं राक्षोघ्नं शापाभिशापप्रायं षट् सप्त वाद्या जगत्य एकविंशीत्रयोविंश्यौ चाष्टादशी मारुती च दशमीचतुर्दश्यावाग्नेय्यौ दैव्येकादश्यन्त्यानुष्टुन्नवमी द्वादशी त्रयोदशी सौम्यः सप्तदशी ग्राव्ण्यष्टमीषोळश्यावैन्द्र्यौ प्र वर्तयेति पञ्चैन्द्र्यो मा नो रक्ष इत्यृषेरात्मन आशीरुत्तरोऽर्धर्चः पृथिव्यन्तरिक्षदेवतः' इति । अत्र बृहद्देवतायामनुक्रम्यते- संवत्सरं तु मण्डूकानैन्द्रासोमं परं तु यत् ॥ ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः । हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा ॥ (बृहद्दे. ६. २७-२८) इति । अतो रक्षोनिबर्हणार्थमेतत्सूक्तं जप्यम् ॥

इन्द्रा॑सोमा॒ तप॑तं॒ रक्ष॑ उ॒ब्जतं॒ न्य॑र्पयतं वृषणा तमो॒वृध॑ः ।

परा॑ शृणीतम॒चितो॒ न्यो॑षतं ह॒तं नु॒देथा॒ं नि शिं॑शीतम॒त्रिण॑ः ॥१

इन्द्रा॑सोमा । तप॑तम् । रक्ष॑ः । उ॒ब्जत॑म् । नि । अ॒र्प॒य॒त॒म् । वृ॒ष॒णा॒ । त॒मः॒ऽवृध॑ः ।

परा॑ । शृ॒णी॒त॒म् । अ॒चित॑ः । नि । ओ॒ष॒त॒म् । ह॒तम् । नु॒देथा॑म् । नि । शि॒शी॒त॒म् । अ॒त्रिण॑ः ॥१

इन्द्रासोमा । तपतम् । रक्षः । उब्जतम् । नि । अर्पयतम् । वृषणा । तमःऽवृधः ।

परा । शृणीतम् । अचितः । नि । ओषतम् । हतम् । नुदेथाम् । नि । शिशीतम् । अत्रिणः ॥१

हे "इन्द्रासोमा । इन्द्रश्च सोमश्चेन्द्रासोमौ । 'देवताद्वन्द्वे च ' इति पूर्वपदस्थानङ्। आमन्त्रिताद्युदात्तत्वम् । "रक्षः रक्षांसि । जातावेकवचनम् । युवां "तपतं संतापयतम् ।' आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवत्वात् तपतमिति तिङन्तस्य निघाताभावः । तथा "उब्जतं हिंस्तम् । उब्जतिर्हिंसाकर्मा । तिङः परत्वान्निघाताभावः । हे "वृषणा वृषणौ कामानां वर्षितारौ "न्यर्पयतं रक्षांसि नीचैष्ट्वं प्रापयतम् । "तमोवृधः तमसावरकेणान्धकारेण मायारूपेण वर्धमानान् तमसि रात्रौ वर्धमानान् वा "अचितः ज्ञानरहितान् मूढान् राक्षसान् "परा "शृणीतम् । पराङ्मुखा यथा भवन्ति तथा हिंस्तम्। तथा "न्योषतं नितरां दहतम्।' उष दाहे'। "हतं तान् मारयतम्। "नुदेथाम् अस्मत्तो हतांस्तान् प्रेरयेथाम् । "अत्रिणः अदनशीलांस्तान् राक्षसान् "नि "शिशीतं नितरां तनूकुरुतम् ॥

इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं तपु॑र्ययस्तु च॒रुर॒ग्नि॒वाँ इ॑व ।

ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑ ॥२

इन्द्रा॑सोमा । सम् । अ॒घऽशं॑सम् । अ॒भि । अ॒घम् । तपु॑ः । य॒य॒स्तु॒ । च॒रुः । अ॒ग्नि॒वान्ऽइ॑व ।

ब्र॒ह्म॒ऽद्विषे॑ । क्र॒व्य॒ऽअदे॑ । घो॒रऽच॑क्षसे । द्वेष॑ः । ध॒त्त॒म् । अ॒न॒वा॒यम् । कि॒मी॒दिने॑ ॥२

इन्द्रासोमा । सम् । अघऽशंसम् । अभि । अघम् । तपुः । ययस्तु । चरुः । अग्निवान्ऽइव ।

ब्रह्मऽद्विषे । क्रव्यऽअदे । घोरऽचक्षसे । द्वेषः । धत्तम् । अनवायम् । किमीदिने ॥२

हे इन्द्रासोमौ "अघशंसम् अघस्यानर्थस्य शंसितारम् "अघम् आगत्य हन्तारं राक्षसं "सं सहैव । "अभि इति श्रुतेर्योग्यक्रियाध्याहारः । अभिभवतम् । स च "तपुः युवयोस्तेजसा तप्यमानो राक्षसः "अग्निवानिव अग्नियुक्तोऽग्नौ प्रक्षिप्तः "चरुः इव "ययस्तु । ' यसु प्रयत्ने'। केवलोऽप्ययमाङ्पूर्वार्थो द्रष्टव्यः । आयस्यतु आयासं प्राप्नोतु । उपक्षीयतामित्यर्थः । अपि च "ब्रह्मद्विषे ब्राह्मणेभ्योऽस्मभ्यं द्वेष्ट्रे "क्रव्यादे क्रव्यं मांस भक्षयित्रे "घोरचक्षसे घोरदर्शनाय परुषभाषिणे वा "किमीदिने किमिदानीमिति चरते पिशुनाय "द्वेषः द्वेष्यभावम् "अनवायम् अव्यवायमनवयवं नैरन्तर्येण यथा भवति तथा "धत्तं दत्तम् ॥

इन्द्रा॑सोमा दु॒ष्कृतो॑ व॒व्रे अ॒न्तर॑नारम्भ॒णे तम॑सि॒ प्र विं॑ध्यतम् ।

यथा॒ नात॒ः पुन॒रेक॑श्च॒नोदय॒त्तद्वा॑मस्तु॒ सह॑से मन्यु॒मच्छव॑ः ॥३

इन्द्रा॑सोमा । दुः॒ऽकृतः॑ । व॒व्रे । अ॒न्तः । अ॒ना॒र॒म्भ॒णे । तम॑सि । प्र । वि॒ध्य॒त॒म् ।

यथा॑ । न । अतः॑ । पुनः॑ । एकः॑ । च॒न । उ॒त्ऽअय॑त् । तत् । वा॒म् । अ॒स्तु॒ । सह॑से । म॒न्यु॒ऽमत् । शवः॑ ॥३

इन्द्रासोमा । दुःऽकृतः । वव्रे । अन्तः । अनारम्भणे । तमसि । प्र । विध्यतम् ।

यथा । न । अतः । पुनः । एकः । चन । उत्ऽअयत् । तत् । वाम् । अस्तु । सहसे । मन्युऽमत् । शवः ॥३

हे इन्द्रासोमौ "दुष्कृतः दुष्कर्मकारिणः राक्षसान् “वव्रे वारके “अन्तः मध्ये "अनारम्भणे आलम्बनरहिते “तमसि अन्धकारे “प्र “विध्यतं प्रवेश्य ताडयतम् । "यथा येन प्रकारेणैषां मध्ये “एकश्चन एकोऽपि राक्षसः "अतः अस्मात्तमसः “पुनः “न “उदयत् उद्गच्छेत् । तथा विध्यतमित्यर्थः । एतेर्लेट्यडागमः । इतश्च लोपः' इतीकारलोपः । गुणावादेशौ । "तत् प्रसिद्धं "मन्युमत् क्रोधयुक्तं "वां युवयोः "शवः बलं "सहसे रक्षसामभिभवनाय "अस्तु भवतु ॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वो व॒धं सं पृ॑थि॒व्या अ॒घशं॑साय॒ तर्ह॑णम् ।

उत्त॑क्षतं स्व॒र्यं१॒॑ पर्व॑तेभ्यो॒ येन॒ रक्षो॑ वावृधा॒नं नि॒जूर्व॑थः ॥४

इन्द्रा॑सोमा । व॒र्तय॑तम् । दि॒वः । व॒धम् । सम् । पृ॒थि॒व्याः । अ॒घऽशं॑साय । तर्ह॑णम् ।

उत् । त॒क्ष॒त॒म् । स्व॒र्य॑म् । पर्व॑तेभ्यः । येन॑ । रक्षः॑ । व॒वृ॒धा॒नम् । नि॒ऽजूर्व॑थः ॥४

इन्द्रासोमा । वर्तयतम् । दिवः । वधम् । सम् । पृथिव्याः । अघऽशंसाय । तर्हणम् ।

उत् । तक्षतम् । स्वर्यम् । पर्वतेभ्यः । येन । रक्षः । ववृधानम् । निऽजूर्वथः ॥४

हे इन्द्रासोमौ "दिवः अन्तरिक्षात् द्युलोकाद्वा "वधं हननसाधनमायुधं “सं "वर्तयतम् उत्पादयतम् । “पृथिव्याः अस्मादपि लोकात् “तर्हणं हिंसकमायुधम् "अघशंसाय अघशंसमनर्थस्याशंसकं राक्षसं हन्तुमुत्पादयतम् । तथा “पर्वतेभ्यः पर्ववद्भ्यो मेघेभ्यः सकाशात् स्वर्यम्। ‘स्वृ शब्दोपतापयोः'। उपतापकमशनिम् "उत्तक्षतम् उद्धृतं कुरुतम् । "येन अशनिना “वावृधानं वर्धमानं प्रवृद्धं वा "रक्षः राक्षसं निजूर्वथः निहथः। ‘जुर्वी हिंसायाम् । तमशनिमुत्तक्षतमित्यर्थः ॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वस्पर्य॑ग्नित॒प्तेभि॑र्यु॒वमश्म॑हन्मभिः ।

तपु॑र्वधेभिर॒जरे॑भिर॒त्रिणो॒ नि पर्शा॑ने विध्यत॒ं यन्तु॑ निस्व॒रम् ॥५

इन्द्रा॑सोमा । व॒र्तय॑तम् । दि॒वः । परि॑ । अ॒ग्नि॒ऽत॒प्तेभिः॑ । यु॒वम् । अश्म॑हन्मऽभिः ।

तपुः॑ऽवधेभिः । अ॒जरे॑भिः । अ॒त्रिणः॑ । नि । पर्शा॑ने । वि॒ध्य॒त॒म् । यन्तु॑ । नि॒ऽस्व॒रम् ॥५

इन्द्रासोमा । वर्तयतम् । दिवः । परि । अग्निऽतप्तेभिः । युवम् । अश्महन्मऽभिः ।

तपुःऽवधेभिः । अजरेभिः । अत्रिणः । नि । पर्शाने । विध्यतम् । यन्तु । निऽस्वरम् ॥५

हे इन्द्रासोमौ "दिवः अन्तरिक्षात् परितः सर्वतः "वर्तयतम् आयुधानि प्रेरयतम् । "युवं तौ युवाम् "अग्नितप्तेभिः अग्निना संतप्तैः “तपुर्वधेभिः तापकप्रहारैः "अजरेभिः जरारहितैर्दृढैः "अश्महन्मभिः अश्मसारभूतस्यायसो विकारैर्हननसाधनैस्तैरायुधैः "अत्रिणः राक्षसस्य “पर्शाने पार्श्वस्थाने "नि "विध्यतं निहतम् । ते च राक्षसाः "निःस्वरं निःशब्दं "यन्तु अपयन्तु निर्गच्छन्तु ॥ ॥५॥

इन्द्रा॑सोमा॒ परि॑ वां भूतु वि॒श्वत॑ इ॒यं म॒तिः क॒क्ष्याश्वे॑व वा॒जिना॑ ।

यां वा॒ं होत्रा॑ं परिहि॒नोमि॑ मे॒धये॒मा ब्रह्मा॑णि नृपती॑व जिन्वतम् ॥६

इन्द्रा॑सोमा । परि॑ । वा॒म् । भू॒तु॒ । वि॒श्वतः॑ । इ॒यम् । म॒तिः । क॒क्ष्या॑ । अश्वा॑ऽइव । वा॒जिना॑ ।

याम् । वा॒म् । होत्रा॑म् । प॒रि॒ऽहि॒नोमि॑ । मे॒धया॑ । इ॒मा । ब्रह्मा॑णि । नृ॒पती॑ इ॒वेति॑ नृ॒पती॑ऽइव । जि॒न्व॒त॒म् ॥६

इन्द्रासोमा । परि । वाम् । भूतु । विश्वतः । इयम् । मतिः । कक्ष्या । अश्वाऽइव । वाजिना ।

याम् । वाम् । होत्राम् । परिऽहिनोमि । मेधया । इमा । ब्रह्माणि । नृपती इवेति नृपतीऽइव । जिन्वतम् ॥६

हे इन्द्रासोमौ "इयम् अस्माभिः क्रियमाणा “मतिः मननीया स्तुतिः "वाजिना वाजिनौ बलवन्तौ "वां युवां "विश्वतः सर्वतः "परि "भूतु परिगृह्णातु व्याप्नोतु वा । तत्र दृष्टान्तः । "कक्ष्या कक्षबन्धनी रज्जुः "अश्वेव यथाश्वं परिगृह्णाति तद्वत् । "यां “होत्रां वाचं "वां युवाभ्यां “मेधया "परिहिनोमि प्रेरयामि । सेयं मतिरिति संबन्धः। अपि च “इमा इमान्यस्माभिः कृतानि “ब्रह्माणि स्तोत्राणि --- यथा धनैः पूरयन्ति तथा "जिन्वतं फलैः पूरयतम् ॥

प्रति॑ स्मरेथां तु॒जय॑द्भि॒रेवै॑र्ह॒तं द्रु॒हो र॒क्षसो॑ भङ्गु॒राव॑तः ।

इन्द्रा॑सोमा दु॒ष्कृते॒ मा सु॒गं भू॒द्यो न॑ः क॒दा चि॑दभि॒दास॑ति द्रु॒हा ॥७

प्रति॑ । स्म॒रे॒था॒म् । तु॒जय॑त्ऽभिः । एवैः॑ । ह॒तम् । द्रु॒हः । र॒क्षसः॑ । भ॒ङ्गु॒रऽव॑तः ।

इन्द्रा॑सोमा । दु॒ःऽकृते॑ । मा । सु॒ऽगम् । भू॒त् । यः । न॒ः । क॒दा । चि॒त् । अ॒भि॒ऽदास॑ति । द्रु॒हा ॥७

प्रति । स्मरेथाम् । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भङ्गुरऽवतः ।

इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भूत् । यः । नः । कदा । चित् । अभिऽदासति । द्रुहा ॥७

हे इन्द्रासोमौ "तुजयद्भिः त्वरमाणैः "एवैः गन्तृभिरश्वैः “प्रति "स्मरेथाम् अभिगच्छतम् । उपसर्गवशेन स्मरतिरत्रार्थान्तरे वर्तते । यथा प्रस्मरणं प्रस्थानमिति । अभिगत्य च "द्रुहः द्रोग्धॄन् “भङ्गुरावतः भञ्जनकर्मवतः "रक्षसः राक्षसान् "हतं हिंस्तम् । हे इन्द्रासोमौ “दुष्कृते पापकारिणे राक्षसाय "सुगं सुखं “मा "भूत् मा भवतु । "द्रुहा द्रोहेण युक्तः "यः "नः अस्मान् "कदा "चित् अपि "अभिदासति अभिहन्ति तस्मै दुष्कृत इत्यन्वयः ॥

यो मा॒ पाके॑न॒ मन॑सा॒ चर॑न्तमभि॒चष्टे॒ अनृ॑तेभि॒र्वचो॑भिः ।

आप॑ इव का॒शिना॒ संगृ॑भीता॒ अस॑न्न॒स्त्वास॑त इन्द्र व॒क्ता ॥८

यः । मा॒ । पाके॑न । मन॑सा । चर॑न्तम् । अ॒भि॒ऽचष्टे॑ । अनृ॑तेभिः । वचः॑ऽभिः ।

आपः॑ऽइव । का॒शिना॑ । सम्ऽगृ॑भीताः । अस॑न् । अ॒स्तु॒ । अस॑तः । इ॒न्द्र॒ । व॒क्ता ॥८

यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे । अनृतेभिः । वचःऽभिः ।

आपःऽइव । काशिना । सम्ऽगृभीताः । असन् । अस्तु । असतः । इन्द्र । वक्ता ॥८

“पाकेन पक्वेन शुद्धेन "मनसा "चरन्तं वर्तमानं सत्यवादिनं "यः मां राक्षसः "अनृतेभिः अनृतैरसत्यैः “वचोभिः वचनैः "अभिचष्टे अभिशंसति मय्यसत्यवचनमारोपयति हे "इन्द्र "काशिना मुष्टिना "संगृभीताः सम्यग्गृहीताः "आपइव यथापो विशीर्णा भवन्ति तथा “असतः असत्यस्य “वक्ता स राक्षसः "असन्नस्तु अविद्यमानो भवतु । नश्यत्वित्यर्थः ॥

ये पा॑कशं॒सं वि॒हर॑न्त॒ एवै॒र्ये वा॑ भ॒द्रं दू॒षय॑न्ति स्व॒धाभि॑ः ।

अह॑ये वा॒ तान्प्र॒ददा॑तु॒ सोम॒ आ वा॑ दधातु॒ निरृ॑तेरु॒पस्थे॑ ॥९

ये । पा॒क॒ऽशं॒सम् । वि॒ऽहर॑न्ते । एवैः॑ । ये । वा॒ । भ॒द्रम् । दू॒षय॑न्ति । स्व॒धाभिः॑ ।

अह॑ये । वा॒ । तान् । प्र॒ऽददा॑तु । सोमः॑ । आ । वा॒ । द॒धा॒तु॒ । निःऽऋ॑तेः । उ॒पऽस्थे॑ ॥९

ये । पाकऽशंसम् । विऽहरन्ते । एवैः । ये । वा । भद्रम् । दूषयन्ति । स्वधाभिः ।

अहये । वा । तान् । प्रऽददातु । सोमः । आ । वा । दधातु । निःऽऋतेः । उपऽस्थे ॥९

"ये राक्षसाः "पाकशंसं परिपक्ववचनं सत्यभाषिणं माम् "एवैः एतव्यैः प्राप्तव्यैरात्मीयैः कामैर्हेतुभूतैः "विहरन्ते विशेषेण हरन्ति उपक्षपयन्ति । यथाकामं परिवदन्तीत्यर्थः। "ये "वा “स्वधाभिः बलैर्युक्ताः "भद्रं कल्याणवर्तनं मां "दूषयन्ति दुष्टं कुर्वन्ति "तान् सर्वान् "सोमः "अहये “वा सर्पाय वा "प्रददातु । “निर्ऋतेः पापदेवतायाः "उपस्थे उत्सङ्गे “वा “आ "दधातु प्रक्षिपतु ॥

यो नो॒ रसं॒ दिप्स॑ति पि॒त्वो अ॑ग्ने॒ यो अश्वा॑नां॒ यो गवां॒ यस्त॒नूना॑म् ।

रि॒पुः स्ते॒नः स्तेय॒कृद्द॒भ्रमे॑तु॒ नि ष ही॑यतां त॒न्वा॒३ तना॑ च ॥१०

यः । नः॒ । रस॑म् । दिप्स॑ति । पि॒त्वः । अ॒ग्ने॒ । यः । अश्वा॑नाम् । यः । गवा॑म् । यः । त॒नूना॑म् ।

रि॒पुः । स्ते॒नः । स्ते॒य॒ऽकृत् । द॒भ्रम् । ए॒तु॒ । नि । सः । ही॒य॒ता॒म् । त॒न्वा॑ । तना॑ । च॒ ॥१०

यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । यः । अश्वानाम् । यः । गवाम् । यः । तनूनाम् ।

रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रम् । एतु । नि । सः । हीयताम् । तन्वा । तना । च ॥१०

हे "अग्ने "यः राक्षसः "नः अस्माकं "पित्वः अन्नस्य “रसं सारं "दिप्सति जिघांसति । "यः च "अश्वानाम् अस्मदीयानां रसं दिसति । "यः च “गवां रसं दिप्सति। "यः च "तनूनाम् अस्मदीयानां शरीराणां रसं दिप्सति । “रिपुः बाधकः “स्तेनः चौरः "स्तेयकृत् धनस्यापहर्ता सः सर्वो जनः "दभ्रं हिंसाम् “एतु प्राप्नोतु । अपि च "सः बाधकः “तन्वा स्वकीयेन शरीरेण “तना “च तनयेन च "नि “हीयतां निहीनो भवतु ॥ ॥ ६ ॥

प॒रः सो अ॑स्तु त॒न्वा॒३॒ तना॑ च ति॒स्रः पृ॑थि॒वीर॒धो अ॑स्तु विश्वाः॑ ।

प्रति॑ शुष्यतु॒ यशो॑ अस्य देवा॒ यो नो॒ दिवा॒ दिप्स॑ति॒ यश्च॒ नक्त॑म् ॥११

प॒रः । सः । अ॒स्तु॒ । त॒न्वा॑ । तना॑ । च॒ । ति॒स्रः । पृ॒थि॒वीः । अ॒धः । अ॒स्तु॒ । विश्वाः॑ ।

प्रति॑ । शु॒ष्य॒तु॒ । यशः॑ । अ॒स्य॒ । दे॒वाः॒ । यः । न॒ः । दिवा॑ । दिप्स॑ति । यः । च॒ । नक्त॑म् ॥११

परः । सः । अस्तु । तन्वा । तना । च । तिस्रः । पृथिवीः । अधः । अस्तु । विश्वाः ।

प्रति । शुष्यतु । यशः । अस्य । देवाः । यः । नः । दिवा । दिप्सति । यः । च । नक्तम् ॥११

“सः राक्षसः “तन्वा “तना “च । व्यत्ययेन तृतीया । तन्वाः शरीरस्य तनयस्य च "परः परस्तात् "अस्तु वर्तमानो भवतु । उभाभ्यां वियुक्तो भवत्वित्यर्थः । "विश्वाः व्याप्ताः "तिस्रः “पृथिवीः त्रीँल्लोकान् "अधो ”अस्तु अधस्ताद्भवतु । लोकत्रयादपि प्रच्युतो भवत्वित्यर्थः । हे "देवाः “अस्य शत्रोः "यशः अन्नं कीर्तिर्वा “प्रति “शुष्यतु । "यः राक्षसः "नः अस्मान् "दिवा अहनि “दिप्सति जिघांसति "यश्च "नक्तं रात्रौ जिघांसति अस्योभयविधस्य यशः प्रति शुष्यत्विति संबन्धः॥

सु॒वि॒ज्ञा॒नं चि॑कि॒तुषे॒ जना॑य॒ सच्चास॑च्च॒ वच॑सी पस्पृधाते ।

तयो॒र्यत्स॒त्यं य॑त॒रदृजी॑य॒स्तदित्सोमो॑ऽवति॒ हन्त्यास॑त् ॥१२

सु॒ऽवि॒ज्ञा॒नम् । चि॒कि॒तुषे॑ । जना॑य । सत् । च॒ । अस॑त् । च॒ । वच॑सी॒ इति॑ । प॒स्पृ॒धा॒ते॒ इति॑ ।

तयोः॑ । यत् । स॒त्यम् । य॒त॒रत् । ऋजी॑यः । तत् । इत् । सोमः॑ । अ॒व॒ति॒ । हन्ति॑ । अस॑त् ॥१२

सुऽविज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च । वचसी इति । पस्पृधाते इति ।

तयोः । यत् । सत्यम् । यतरत् । ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२

प्रायेणेदमादिभिर्ऋग्भी राक्षसेन सहर्षिणा शपथः क्रियते । अत्र केचिदाहुः– हत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः । वसिष्ठं राक्षसोऽसि त्वं वासिष्ठं रूपमास्थितः ॥ अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत् । अत्रोत्तरा ऋचो दृष्टा वसिष्ठेनेति नः श्रुतम् ॥

इति । "चिकितुषे विदुषे "जनाय इदं "सुविज्ञानं विज्ञातुं सुशकं भवति । किं तत् । "सच्च सत्यं च "असच्च असत्यं च । "वचसी सत्यासत्यरूपे वचने "पस्पृधाते मिथः स्पर्धेते । "तयोः सदसतोर्मध्ये "यत्सत्यं यथार्थं वचनं "यतरत् यच्च "ऋजीयः ऋजुतममकुटिलं "तदित् तदेवाकुटिलं सत्यभाषणं "सोमः "अवति रक्षति । "असत् उक्तविलक्षणमसत्यं "हन्ति हिनस्ति। एवं सत्यावयोर्मध्ये कतरोऽनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः ॥

न वा उ॒ सोमो॑ वृजि॒नं हि॑नोति॒ न क्ष॒त्रियं॑ मिथु॒या धा॒रय॑न्तम् ।

हन्ति॒ रक्षो॒ हन्त्यास॒द्वद॑न्तमु॒भाविन्द्र॑स्य॒ प्रसि॑तौ शयाते ॥१३

न । वै । ऊं॒ इति॑ । सोमः॑ । वृ॒जि॒नम् । हि॒नो॒ति॒ । न । क्ष॒त्रिय॑म् । मि॒थु॒या । धा॒रय॑न्तम् ।

हन्ति॑ । रक्षः॑ । हन्ति॑ । अस॑त् । वद॑न्तम् । उ॒भौ । इन्द्र॑स्य । प्रऽसि॑तौ । श॒या॒ते॒ इति॑ ॥१३

न । वै । ऊं इति । सोमः । वृजिनम् । हिनोति । न । क्षत्रियम् । मिथुया । धारयन्तम् ।

हन्ति । रक्षः । हन्ति । असत् । वदन्तम् । उभौ । इन्द्रस्य । प्रऽसितौ । शयाते इति ॥१३

"वृजिनं पापकारिणं राक्षसं "सोमः देवः "न "वा "उ न खलु "हिनोति प्रेरयति । गच्छ त्वमिति न मुञ्चति । तथा "क्षत्रियम् । क्षत्रं बलम् । तद्वन्तं "मिथुया मिथ्याभूतं वचनं "धारयन्तं बिभ्रतमसत्यवादिनं पुरुषं "न च हिनोति न विसृजति । अपि तु "रक्षः राक्षसं हन्ति । "असत् असत्यं "वदन्तं च "हन्ति हिनस्ति । "उभौ राक्षसानृतवादिनौ तौ सोमेन हतौ "इन्द्रस्य संबन्धिनि "प्रसितौ बन्धने "शयाते निवसतः । यद्वा । इन्द्रस्येति तृतीयार्थे षष्ठी । इन्द्रेणेश्वरेण सोमेन प्रसितौ बद्धौ। 'षिञ् बन्धने' । अस्मात् कर्मणि निष्ठा ।' गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

यदि॑ वा॒हमनृ॑तदेव॒ आस॒ मोघं॑ वा दे॒वाँ अ॑प्यू॒हे अ॑ग्ने ।

किम॒स्मभ्यं॑ जातवेदो हृणीषे द्रोघ॒वाच॑स्ते निरृ॒थं स॑चन्ताम् ॥१४

यदि॑ । वा॒ । अ॒हम् । अनृ॑तऽदेवः । आस॑ । मोघ॑म् । वा॒ । दे॒वान् । अ॒पि॒ऽऊ॒हे । अ॒ग्ने॒ ।

किम् । अ॒स्मभ्य॑म् । जा॒त॒ऽवे॒दः॒ । हृ॒णी॒षे॒ । द्रो॒घ॒ऽवाचः॑ । ते॒ । निः॒ऽऋ॒थम् । स॒च॒न्ता॒म् ॥१४

यदि । वा । अहम् । अनृतऽदेवः । आस । मोघम् । वा । देवान् । अपिऽऊहे । अग्ने ।

किम् । अस्मभ्यम् । जातऽवेदः । हृणीषे । द्रोघऽवाचः । ते । निःऽऋथम् । सचन्ताम् ॥१४

"यदि "वा "अहमनृतदेवः अनृता असत्यभूता देवा यस्य तादृशो यद्यहम् "आस अस्मि । अथवा "मोघं "वा निष्फलं वा "देवान् "अप्यूहे उपगच्छामि । अहं यद्युक्तरूपोऽस्मि हे "अग्ने तर्हि मां बाधस्व । न ह्यहं तथाविधोऽस्मि । एवं सति हे "जातवेदः जातानां वेदितरग्ने "अस्मभ्यं किं कारणं "हृणीषे क्रुध्यसि । तव क्रोधोऽस्मासु न जायतामित्यर्थः । "द्रोघवाचः अनृतवाचो राक्षसाः "ते तव "निर्ऋथम् । निष्पूर्वोऽर्तिर्हिंसायां वर्तते । निर्ऋथं निःशेषेणार्तिं हिंसां "सचन्तां सेवन्ताम् ॥

अ॒द्या मु॑रीय॒ यदि॑ यातु॒धानो॒ अस्मि॒ यदि॒ वायु॑स्त॒तप॒ पूरु॑षस्य ।

अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑या॒ यो मा॒ मोघं॒ यातु॑धा॒नेत्याह॑ ॥१५

अ॒द्य । मु॒री॒य॒ । यदि॑ । या॒तु॒ऽधानः॑ । अस्मि॑ । यदि॑ । वा॒ । आयुः॑ । त॒तप॑ । पुरु॑षस्य ।

अध॑ । सः । वी॒रैः । द॒शऽभिः॑ । वि । यू॒याः॒ । यः । मा॒ । मोघ॑म् । यातु॑ऽधान । इति॑ । आह॑ ॥१५

अद्य । मुरीय । यदि । यातुऽधानः । अस्मि । यदि । वा । आयुः । ततप । पुरुषस्य ।

अध । सः । वीरैः । दशऽभिः । वि । यूयाः । यः । मा । मोघम् । यातुऽधान । इति । आह ॥१५

इयमपि शपथरूपैव । "यदि अहं वसिष्ठः "यातुधानः (http://puranastudy.byethost14.com/pur_index24/yaatudhana.htm) राक्षसः "अस्मि "अद्य अस्मिन्नेव दिने “गुरीय म्रियेय । अपि "वा “पुरुषस्य मनुष्यस्य “आयुः जीवितं "यदि अहं राक्षसो भूत्वा "ततप हिंसितवानस्मि तर्ह्यप्यहमद्य म्रियेयेत्यन्वयः । "अध अथैवं स्यात् अहं वसिष्ठस्त्वं राक्षस इति तर्हि “सः त्वं "दशभिः "वीरैः पुत्रैः । उपलक्षणमेतत् । सर्वैर्बन्धुजनैः “वि "यूयाः वियुक्तो भवेः । "यः राक्षसः “मा मां "मोघं मृषैव हे "यातुधान हे राक्षस “इति संबोध्य "आह ॥ ॥ ७ ॥

यो मायां॑तुं यातु॑धा॒नेत्याह॒ यो वा॑ र॒क्षाः शुचि॑र॒स्मीत्याह॑ ।

इन्द्र॒स्तं ह॑न्तु मह॒ता व॒धेन॒ विश्व॑स्य ज॒न्तोर॑ध॒मस्प॑दीष्ट ॥१६

यः । मा॒ । अया॑तुम् । यातु॑ऽधान । इति॑ । आह॑ । यः । वा॒ । र॒क्षाः । शुचिः॑ । अ॒स्मि॒ । इति॑ । आह॑ ।

इन्द्रः॑ । तम् । ह॒न्तु॒ । म॒ह॒ता । व॒धेन॑ । विश्व॑स्य । ज॒न्तोः । अ॒ध॒मः । प॒दी॒ष्ट ॥१६

यः । मा । अयातुम् । यातुऽधान । इति । आह । यः । वा । रक्षाः । शुचिः । अस्मि । इति । आह ।

इन्द्रः । तम् । हन्तु । महता । वधेन । विश्वस्य । जन्तोः । अधमः । पदीष्ट ॥१६

“यः राक्षसो माम् "अयातुम् अराक्षसं सन्तं हे “यातुधान हे राक्षस “इति संबोध्य “आह ब्रूते "यो “वा यश्च "रक्षाः राक्षसः "शुचिरस्मि शुद्धो भवामि न राक्षसोऽस्मि “इत्याह ब्रूते “तम् उभयविधं राक्षसम् "इन्द्रः “महता प्रौढेन “वधेन आयुधेन वज्रेण "हन्तु हिनस्तु । स च “विश्वस्य सर्वस्य "जन्तोः जनस्य “अधमः निकृष्टः सन् “पदीष्ट पततु ॥

प्र या जिगा॑ति ख॒र्गले॑व॒ नक्त॒मप॑ द्रु॒हा त॒न्वं१॒॑ गूह॑माना ।

व॒व्राँ अ॑न॒न्ताँ अव॒ सा प॑दीष्ट ग्रावा॑णो घ्नन्तु र॒क्षस॑ उप॒ब्दैः ॥१७

प्र । या । जिगा॑ति । ख॒र्गला॑ऽइव । नक्त॑म् । अप॑ । द्रु॒हा । त॒न्व॑म् । गूह॑माना ।

व॒व्रान् । अ॒न॒न्तान् । अव॑ । सा । प॒दी॒ष्ट॒ । ग्रावा॑णः । घ्न॒न्तु॒ । र॒क्षसः॑ । उ॒प॒ब्दैः ॥१७

प्र । या । जिगाति । खर्गलाऽइव । नक्तम् । अप । द्रुहा । तन्वम् । गूहमाना ।

वव्रान् । अनन्तान् । अव । सा । पदीष्ट । ग्रावाणः । घ्नन्तु । रक्षसः । उपब्दैः ॥१७

"या राक्षसी "नक्तं रात्रौ "द्रुहा द्रोहेण युक्ता "खर्गलेव उलूकीव "प्र "जिगाति प्रगच्छति । किं कुर्वती । "तन्वं स्वकीयं शरीरम् "अप "गूहमाना अपवृण्वती प्रकाशयन्ती । "सा राक्षसी "अनन्तान् अपर्यन्तान् "वव्रान् गर्तान् "अव "पदीष्ट अवाङ्मुखी पततु । "ग्रावाणः सोमाभिषवार्थाः पाषाणाश्च "उपब्दैः अभिषवशब्दैः "रक्षसः राक्षसान् "घ्नन्तु हिंसन्तु ॥

वि ति॑ष्ठध्वं मरुतो वि॒क्ष्वि१॑च्छत॑ गृभा॒यत॑ र॒क्षस॒ः सं पि॑नष्टन ।

वयो॒ ये भू॒त्वी प॒तय॑न्ति न॒क्तभि॒र्ये वा॒ रिपो॑ दधि॒रे दे॒वे अ॑ध्व॒रे ॥१८

वि । ति॒ष्ठ॒ध्व॒म् । म॒रु॒तः॒ । वि॒क्षु । इ॒च्छत॑ । गृ॒भा॒यत॑ । र॒क्षसः॑ । सम् । पि॒न॒ष्ट॒न॒ ।

वयः॑ । ये । भू॒त्वी । प॒तय॑न्ति । न॒क्तऽभिः॑ । ये । वा॒ । रिपः॑ । द॒धि॒रे । दे॒वे । अ॒ध्व॒रे ॥१८

वि । तिष्ठध्वम् । मरुतः । विक्षु । इच्छत । गृभायत । रक्षसः । सम् । पिनष्टन ।

वयः । ये । भूत्वी । पतयन्ति । नक्तऽभिः । ये । वा । रिपः । दधिरे । देवे । अध्वरे ॥१८

हे "मरुतः यूयं "विक्षु प्रजासु "वि "तिष्ठध्वं विविधं तिष्ठत । तत्र गूढान् राक्षसान् हन्तुम् "इच्छत अन्विच्छत । तदनन्तरं "रक्षसः तान् राक्षसान् "गृभायत गृभ्णीत गृह्णीत । गृहीत्वा च "सं "पिनष्टन चूर्णयत । "ये राक्षसाः "वयः पक्षिणः "भूत्वी भूत्वा "नक्तभिः रात्रिभी रात्रिषु "पतयन्ति आगच्छन्ति । "ये "वा ये च "देवे दीप्ते "अध्वरे यागे "रिपः हिंसाः "दधिरे विदधिरे । तान् राक्षसान् सं पिनष्टनेत्यन्वयः ॥

प्र व॑र्तय दि॒वो अश्मा॑नमिन्द्र॒ सोम॑शितं मघव॒न्सं शि॑शाधि ।

प्राक्ता॒दपा॑क्तादध॒रादुद॑क्ता॒द॒भि ज॑हि र॒क्षस॒ः पर्व॑तेन ॥१९

प्र । व॒र्त॒य॒ । दि॒वः । अश्मा॑नम् । इ॒न्द्र॒ । सोम॑ऽशितम् । म॒घ॒ऽव॒न् । सम् । शि॒शा॒धि॒ ।

प्राक्ता॑त् । अपा॑क्तात् । अ॒ध॒रात् । उद॑क्तात् । अ॒भि । ज॒हि॒ । र॒क्षसः॑ । पर्व॑तेन ॥१९

प्र । वर्तय । दिवः । अश्मानम् । इन्द्र । सोमऽशितम् । मघऽवन् । सम् । शिशाधि ।

प्राक्तात् । अपाक्तात् । अधरात् । उदक्तात् । अभि । जहि । रक्षसः । पर्वतेन ॥१९

हे "इन्द्र "दिवः अन्तरिक्षात् "अश्मानम् अशनिं “प्र “वर्तय प्रेरय राक्षसान् हन्तुम् । तथा "सोमशितं सोमेन तीक्ष्णीभूतं यजमानं हे “मघवन् धनवन्निन्द्र “सं “शिशाधि संस्कुरु । अपि च "प्राक्तात् प्राच्याः "अपाक्तात् प्रतीच्याः "अधरात् अवाच्याः उदक्तात् उत्तरतः सर्वस्मादपि दिग्भागात् "रक्षसः राक्षसान "पर्वतेन पर्ववता वज्रेण "अभि "जहि मारय ॥

ए॒त उ॒ त्ये प॑तयन्ति॒ श्वया॑तव॒ इन्द्रं॑ दिप्सन्ति दि॒प्सवोऽदा॑भ्यम् ।

शिशी॑ते श॒क्रः पिशु॑नेभ्यो व॒धं नू॒नं सृ॑जद॒शनिं॑ यातु॒मद्भ्यः॑ ॥२०

ए॒ते । उँ॒ इति॑ । त्ये । प॒त॒य॒न्ति॒ । श्वऽया॑तवः । इन्द्र॑म् । दि॒प्स॒न्ति॒ । दि॒प्सवः॑ । अदा॑भ्यम् ।

शिशी॑ते । श॒क्रः । पिशु॑नेभ्यः । व॒धम् । नू॒नम् । सृ॒ज॒त् । अ॒शनि॑म् । या॒तु॒मत्ऽभ्यः॑ ॥२०

एते । ऊं इति । त्ये । पतयन्ति । श्वऽयातवः । इन्द्रम् । दिप्सन्ति । दिप्सवः । अदाभ्यम् ।

शिशीते । शक्रः । पिशुनेभ्यः । वधम् । नूनम् । सृजत् । अशनिम् । यातुमत्ऽभ्यः ॥२०

“त्ये ते एते राक्षसाः “श्वयातवः श्वभिः परिकरभूतैर्हिंसन्तः श्वभिः सह यान्तो वा "पतयन्ति पतन्ति । ये "दिप्सवः जिघांसवः सन्तः "अदाभ्यम् अहिंस्यम् "इन्द्रं “दिप्सन्ति जिघांसन्ति तेभ्यः “पिशुनेभ्यः पिशुनान् कपटान् हन्तुं "शक्रः शक्त इन्द्रः “वधम् आयुधमशनिरूपं “शिशीते तीक्ष्णीकरोति । "यातुमद्भ्यः राक्षसेभ्यः "नूनं क्षिप्रम् "अशनिं "सृजत् विसृजतु हननार्थम् ॥ ॥ ८ ॥

इन्द्रो॑ यातू॒नाम॑भवत्पराश॒रो ह॑वि॒र्मथी॑नाम॒भ्या॒३॑विवा॑सताम् ।

अ॒भीदु॑ श॒क्रः प॑र॒शुर्यथा॒ वनं॒ पात्रे॑व भि॒न्दन्स॒त ए॑ति र॒क्षसः॑ ॥२१

इन्द्रः॑ । या॒तू॒नाम् । अ॒भ॒व॒त् । प॒रा॒ऽश॒रः । ह॒वि॒ःऽमथी॑नाम् । अ॒भि । आ॒ऽविवा॑सताम् ।

अ॒भि । इत् । उँ॒ इति॑ । श॒क्रः । प॒र॒शुः । यथा॑ । वन॑म् । पात्रा॑ऽइव । भि॒न्दन् । स॒तः । ए॒ति॒ । र॒क्षसः॑ ॥२१

इन्द्रः । यातूनाम् । अभवत् । पराऽशरः । हविःऽमथीनाम् । अभि । आऽविवासताम् ।

अभि । इत् । ऊं इति । शक्रः । परशुः । यथा । वनम् । पात्राऽइव । भिन्दन् । सतः । एति । रक्षसः ॥२१

“यातूनां हिंसकानां रक्षसामयम् "इन्द्रः "पराशरः पराशातयिता हिंसिता “अभवत् । कीदृशानाम् । "हविर्मथीनां हवींषि मथ्नतामभिमुखम् "आविवासताम् आगच्छताम् । अपि चायं “शक्रः इन्द्रः “वनं वृक्षजातं “परशुर्यथा छिन्दन् कुठार इव "पात्रेव मृन्मयानि पात्राणि "भिन्दन् मुद्गर इव च "सतः । प्राप्तनामैतत् । यदाह यास्कः-' तिरः सत इति प्राप्तस्य ' (निरु. ३. २०) इति । प्राप्तान् "रक्षसः राक्षसान् भिन्दन् हिंसन् "अभि "एति अभिगच्छति । इदू पूरणौ ॥

उलू॑कयातुं शुशु॒लूक॑यातुं ज॒हि श्वया॑तुमु॒त कोक॑यातुम् ।

सु॒प॒र्णया॑तुमु॒त गृध्र॑यातुं दृ॒षदे॑व॒ प्र मृ॑ण॒ रक्ष॑ इन्द्र ॥२२

उलू॑कऽयातुम् । शु॒शु॒लूक॑ऽयातुम् । ज॒हि । श्वऽया॑तुम् । उ॒त । कोक॑ऽयातुम् ।

सु॒प॒र्णऽया॑तुम् । उ॒त । गृध्र॑ऽयातुम् । दृ॒षदा॑ऽइव । प्र । मृ॒ण॒ । रक्षः॑ । इ॒न्द्र॒ ॥२२

उलूकऽयातुम् । शुशुलूकऽयातुम् । जहि । श्वऽयातुम् । उत । कोकऽयातुम् ।

सुपर्णऽयातुम् । उत । गृध्रऽयातुम् । दृषदाऽइव । प्र । मृण । रक्षः । इन्द्र ॥२२

"उलुकयातुम् । उलूकैः परिकरभूतैः सह यातयति हिनस्तीति याति गच्छतीति वोलूकया यद्वा उलूकरूपी यातीत्युलुकयातुः । हे इन्द्र तादृशं राक्षसं "जहि विनाशय । तथा च बृहद्देवतामुक्तम्- उलूकयातुं जह्येतान्नानारूपान्निशाचरान् ॥ स्त्रीपुंरूपांश्च तिर्यञ्चो जिघांसूनिन्द्र मे जहि (बृहद्दे. ६. ३२) इति । एवमुत्तरत्रापि योज्यम् । "शुशुलूकयातुम् । उलूका द्विविधा बृहदुलूक अल्पोलूकाश्चेति । तत्रोलूकयातुमिति बृहदुलूकाभिप्रायेणोक्तम् । शिशुरल्प उलूकः शुशुलूकः । तद्रूपे वर्तमानं राक्षसं “श्वयातुं श्वरूपेण वर्तमानं राक्षसम् "उत अपि च "कोकयातुम् । कोकश्चक्रवाकः तद्रूपेण वर्तमानं राक्षसं "सुपर्णयातुम् । सुपर्णः श्येनः । तदाकारं यातुधानम् "उत अपि च "गृध्रयातुं गृध्ररूपं च यातुधानम् । एतान् सर्वान्नानाकारान् हे “इन्द्र जहि। किं बहुना “दृषदेव पाषाणेनेव वज्रेण "रक्षः राक्षसमात्रं “प्र “मृण मारय ।।

मा नो॒ रक्षो॑ अ॒भि न॑ड्यातु॒माव॑ता॒मपो॑च्छतु मिथु॒ना या कि॑मी॒दिना॑ ।

पृ॒थि॒वी न॒ः पार्थि॑वात्पा॒त्वंह॑सो॒ऽन्तरि॑क्षं दि॒व्यात्पा॑त्व॒स्मान् ॥२३

मा । न॒ः । रक्षः॑ । अ॒भि । न॒ट् । या॒तु॒ऽमाव॑ताम् । अप॑ । उ॒च्छ॒तु॒ । मि॒थु॒ना । या । कि॒मी॒दिना॑ ।

पृ॒थि॒वी । न॒ः । पार्थि॑वात् । पा॒तु॒ । अंह॑सः । अ॒न्तरि॑क्षम् । दि॒व्यात् । पा॒तु॒ । अ॒स्मान् ॥२३

मा । नः । रक्षः । अभि । नट् । यातुऽमावताम् । अप । उच्छतु । मिथुना । या । किमीदिना ।

पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥२३

“रक्षः राक्षसजातिः "नः अस्मान् “मा "अभि "नट् माभिव्याप्नोतु । नशतेर्व्याप्तिकर्मणो लुङि 'मन्त्रे घस' इति च्लेर्लुक्। 'न माङ्योगे' इत्यडभावः। तथा "यातुमावतां यातनावतां राक्षसानां "मिथुना मिथुनानि स्त्रीपुंसरूपाणि युगलानि “अपोच्छतु । उषा अपि विवासयतु अपवर्जयतु । “या यानि मिथुनानि “किमीदिना किमीदिनानि किमिदं किमिदमिति जिघांसया वर्तमानानि भवन्ति । अपि च "पृथिवी प्रथितेयं भूमिश्च “नः अस्मान् "पार्थिवात् पृथिव्या अन्तरिक्षस्य संबन्धिनः "अंहसः पापात् "पातु रक्षतु । "अन्तरिक्षं च "दिव्यात् दिविभवात् पापात् “अस्मान् "पातु रक्षतु ।।

इन्द्र॑ ज॒हि पुमां॑सं यातु॒धान॑मु॒त स्त्रियं॑ मा॒यया॒ शाश॑दानाम् ।

विग्री॑वासो॒ मूर॑देवा ऋदन्तु॒ मा ते दृ॑श॒न्सूर्य॑मु॒च्चर॑न्तम् ॥२४

इन्द्रं । ज॒हि । पुमां॑सम् । या॒तु॒ऽधानं॑म् । उ॒त । स्त्रियं॑म् । मा॒यया॑ । शाश॑दानाम् ।

विऽग्रीं॑वासः । मूर॑ऽदेवाः । ऋ॒द॒न्तु॒ । मा । ते । दृ॒श॒न् । सूर्यं॑म् । उ॒त्ऽचर॑न्तम् ॥२४

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् । मायया । शाशदानाम् ।

विऽग्रीवासः । मूरऽदेवाः । ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्ऽचरन्तम् ॥२४

हे "इन्द्र “पुमांसं पुंरूपधारिणं "यातुधानं राक्षसं "जहि मारय । "उत अपि च "मायया वञ्चनया “शाशदानां हिंसन्तीं “स्त्रियं राक्षसीं च जहि । अपि च मूरदेवाः मारणक्रीडा राक्षसाः “विग्रीवासः विच्छिन्नग्रीवाः सन्तः “ऋदन्तु नश्यन्तु । "ते तथाविधा राक्षसाः “उच्चरन्तम् उद्यन्तं "सूर्यम् आदित्यं "मा “दृशन् मा द्राक्षुः ।।

प्रति॑ चक्ष्व॒ वि च॒क्ष्वेन्द्र॑श्च सोम जागृतम् ।

रक्षो॑भ्यो व॒धम॑स्यतम॒शनिं॑ यातु॒मद्भ्य॑ः ॥२५

प्रति॑ । च॒क्ष्व॒ । वि । च॒क्ष्व॒ । इन्द्रः॑ । च॒ । सो॒म॒ । जा॒गृ॒त॒म् ।

रक्षः॑ऽभ्यः । व॒धम् । अ॒स्य॒त॒म् । अ॒शनि॑म् । या॒तु॒मत्ऽभ्यः॑ ॥२५

प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ।

रक्षःऽभ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्ऽभ्यः ॥२५

हे "सोम त्वम् "इन्द्रश्च “प्रति “चक्ष्व प्रत्येकं पश्य राक्षसान् । तथा “वि “चक्ष्व विविधं पश्य । यथास्मान्न बाधेरन् तथा पश्येत्यर्थः । युवां च संहतौ "जागृतम्। जागरूकौ रक्षोवधोद्युक्तौ भवतम् । "यातुमद्भ्यः हिंसावद्यःजर “रक्षोभ्यः राक्षसेभ्यः “अशनिम् अशनिरूपं “वधम् आयुधम् “अत्यतं क्षिपतम् ॥ ॥ ९ ॥

॥ इति सप्तमे मण्डले षष्ठोऽनुवाकः । सप्तमं मण्डलं समाप्तम् ॥

---

**टिप्पणी**

७.१०४.१६ यो मायातुं यातुधानेति --

ऋङ् मोघमन्त्रं निन्दा च शापो यो मेत्यृगेव तु । याञ्चा यदिन्द्र चित्रेति क्षेपोऽभीदमिति त्वृचि ।।बृहद्देवता १.४९ ।।

७.१०४.२२ उलू॑कयातुं शुशुलूक॑यातुं ज॒हि श्वया॑तुमु॒त कोक॑यातुम् । सु॒प॒र्णया॑तुमु॒त गृध्र॑यातुं दृ॒षदे॑व॒ प्र मृ॑ण॒ रक्ष॑ इन्द्र ॥

ऋचि उलूक, शुशुलूकादियातूनां हननकृत्यस्य तुलना इन्द्रेण दृषदस्य हननेनसह कृतमस्ति। इन्द्रः दृषदस्य हननं केन प्रकारेण कर्तुं शक्यते, अस्मिन् संदर्भे अथर्ववेदे मन्त्रमस्ति - इन्द्रस्य या मही दृषत्क्रिमेर्विश्वस्य तर्हणी । तया पिनष्मि सं क्रिमीन् दृषदा खल्वामिव ॥१॥ - शौ.अ. २.३१.१ (https://sa.wikisource.org/s/1wfe) । इन्द्रः केनापि प्रकारेण दृषदस्य मह्नं कर्तुं समर्थः भवति। ऋ. ८.७२.४ (https://sa.wikisource.org/s/13kv) मध्ये कथनं अस्ति - दृषदं जिह्वयावधीत् ॥ यदा जिह्वा बन्धनतः मुक्ता भूत्वा कपालकुहरे प्रविष्टुं समर्था भवति, तदा दिव्यरसानां आस्वादनकर्तुं शक्ता भवति। तदा हनूरूपा या दृषदस्ति, तस्याः हननं भवति, इति कथितुं शक्यन्ते। द्र. दृषदोपरि टिप्पणी (http://puranastudy.freevar.com/pur_index14/drishat.htm)

ये उलूक, शुशुलूकादि यातूनि सन्ति, एका व्याख्या एवंप्रकारेण कर्तुं शक्यन्ते यत् एतानि कटुवाक्यानि सन्ति ये उरसि विक्षोभं उत्पद्यन्ते। तेषां चिकित्सा केन प्रकारेण भवेत्। मृतकस्य उरसि दृषदस्य स्थापनस्य निर्देशमस्ति। द्र. उर उपरि टिप्पणी (https://sites.google.com/site/puranicsubjectindex/upavaasa-ura/%E0%A4%89%E0%A4%B0-ura)

